॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## षष्ठस्कन्धः

परमपूज्यपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्

श्री रा घ वे न्द्र स्वा मि वृ न्दा व न स मि तिः

बागलिङ्गम्पल्ली

हैदराबाद्-५०० ०२७

॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## षष्ठस्कन्धः

परमपूज्यपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्

श्री राघवेन्द्र स्वामि वृन्दावन समितिः
बागलिङ्गम्पल्ली
हैदराबाद्–५०० ०२७

# SRIMADBHAGAVATAM
With the commentary of Sri Vijayadhwaja Teertha

*Edited by*
Scholars of Poorna Prajna Vidyapeeta
under the guidance of
H.H. Sri. Vishawesha Teertha Swamiji
of Sri Pejavar Mutt, Udupi

*Published by*
Sri Raghavendraswamy Brindavana Samiti
Lingampally, Hyderabad - 500 027

May - 2004

*Re-Printed by*
**Suchitra Enterprises**
Chikkadpally, Hyderabad - 20
Phone : 27668446

## अनुग्रहवचनम्

श्रीमद्भागवतषष्ठस्कन्धस्यास्मत्पूर्वाचार्यैः श्रीविजयध्वजतीर्थैं रचिता पदरत्नावली टीका भगवद्भक्तेभ्योऽध्येतृभ्यश्चेदानीमुपायनीक्रियत इति सन्तुष्यति नश्चित्तम्। अत्र स्कन्धे अजामिलचरितम्, प्रचेतोभ्यो दक्षजन्म, दक्षस्य सन्तानार्थं तपश्चरणम्, तस्य पुत्राणां संन्यासस्वीकारः, ततः पुत्रीणां जन्म, तासां सन्ततिः, वृत्रचरितम्, पुंसवनव्रतम् इत्येते विषयाः प्राधान्येन निरूपिताः। अत्रापि श्रीविजयध्वजतीर्थैर्बहुषु स्थलेषु स्वव्याख्यानकौशलं प्रादर्शीत्येतदतिरोहितमध्येतृणाम्।

अस्य स्कन्धस्य शोधने, संपादने, मुद्रणे च बद्धादराणां सर्वेषां विदुषां तथाऽस्मिन् कार्ये निरन्तरैधमानोत्साहश्रद्धाभ्यां प्रयतमानाया हैदराबाद्नगरे बागलिङ्गम्पल्लीस्थश्रीराघवेन्द्रस्वामिबृन्दावनसमित्याश्च श्रीरामविठ्ठलौ भगवान् श्रीकृष्णश्च सर्वश्रेयोऽभिवृद्धिं वितरन्त्वित्याशास्महे।

अक्षय्यतृतीया
प्रजोत्पत्तिसंवत्सरः
१६-५-१९९१

श्रीविश्वेशतीर्थश्रीपादाः
श्रीपेजावरमठाधीशाः

## प्रकाशकवचनम्

परमपूज्यानां तपस्वितल्लजानां श्रीमध्वशास्त्रप्रवचनैकदीक्षाणां श्रीफलिमारु—भण्डारकेरे उभय-मठाधीशानां, तथा तैरेव विशेषणैरलंकृतानां तच्छिष्यमूर्धन्यानां श्रीपेजावरमठाध्यक्षाणां श्रीविश्वेशतीर्थ-श्रीपादानामनुग्रहेण समुल्लसन्तीऽयं श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः श्रीपादानामेव स्फूर्त्या प्रेरिता श्रीमद्भागवतस्य श्रीविजयध्वजतीर्थरचितपदरत्नावलीटीकासहितस्य प्रकाशने कटिबद्धा वर्तत इति धन्यतापादकोऽयं विषयः ।

एतावत्पर्यन्तं आदितः स्कन्धचतुष्टयं प्राकाश्यं नीतम् । क्रमप्राप्ततयेदानीं पञ्चमस्कन्ध एव प्रकाशितव्य आसीत् । तथापि पञ्चमस्कन्धस्य शुद्धतमा काचन मातृका अपूर्णाऽपि श्रीपेजावरमठपुस्त-कागारे वर्तत इति वार्तां श्रुत्वा तस्य लाभलोभेन तमतिहाय षष्ठस्कन्ध एव प्रकाशितः । पञ्चमस्कन्धस्य शुद्धतममातृकान्वेषणप्रयत्नः प्रचलति । अचिरादेव लभ्यते प्रकाश्यते चेति विश्वसिमः ।

ग्रन्थस्यास्य शोधने श्रीहयवदनपुराणिकप्रभृतिभिः बेङ्गलूरुनगरस्थपूर्णप्रज्ञविद्यापीठीयैर्विद्वद्भि-र्विविधमातृकाणां तुलना कृता । मैसूरुनगरे श्री पी. एस्. शेषगिरिराव् तथा डा. शि. एच् श्रीनि-वासमूर्तिः इत्येताभ्यां विद्वद्भ्यां संशोध्य संपाद्य मुद्रापितम् । पूर्णप्रज्ञविद्यापीठीयः विद्वान् अग्निहोत्री वादिराजमहोदयोऽपि अत्र कृतश्रमः । समेषामेषां विदुषां कृतज्ञेयं समितिः ।

चारित्रमुद्रणालययजमानः तत्रभवान् चन्द्रशेखरमहोदयोऽपि शीघ्रसुन्दरमुद्रणाय सम्मानमर्हति ।

बागलिङ्गम्पल्ली
हैदराबाद्

के. सुब्बराय अडिगः
अध्यक्षः
श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः

## सम्पादकीयम्

परमपूज्यानां विद्वदाद्यानां श्रीपेजावरमठाध्यक्षाणां श्रीविश्वेशतीर्थश्रीपादानामाज्ञया प्रवर्तमानैः-स्माभिरेतद्ग्रन्थस्य संशोधने संपादने च यथाशक्ति प्रयतितम्। श्रीविजयध्वजतीर्थकृतटीका पदरत्नावल्याख्या गम्भीरा वर्तते। क्रिस्तीयपञ्चदशशतकस्यादिभागे रचितोऽयं ग्रन्थः महतीं प्रसिद्धिमगमत्। तत्पूर्वतनानां माध्वसिद्धान्तानुसारिव्याख्यानानामसमग्रतया अस्यैव प्रथमसमग्रव्याख्यानतया चायं ग्रन्थः जनानुरागपात्रतामविन्दत। बहूनां लेखकानां परंपरया प्राप्तेऽयं कृतिरिदानीमुपलभ्यते। लेखकाः प्रायेण नातीव व्युत्पन्नाः। अपि च लेखकैर्लिखितग्रन्थेऽध्येतारस्तत्र तत्र प्रान्तेषु बोधसौकर्याय किमपि लिखन्ति। पाश्चात्यलेखकैः सोऽप्यंशो ग्रन्थ एव निवेश्यत इति बहुलावापोद्वापाभ्यामाकुलिता इदानीमुपलभ्यमाना मातृका अस्य ग्रन्थस्य। अत एव संशोधने सम्पादने च महान् प्रयासोऽनुभूयते। अस्माभिर्यथाशक्ति यथाज्ञप्ति प्रयतितम्।

षष्ठस्कन्धस्य यादवार्यकृतव्याख्यानं नास्ति। श्रीसत्यधर्मतीर्थकृता तथा श्रीचेट्टी वेङ्कटाद्रि आचार्यकृता व्याख्या चोपलभ्येते। तत्र सत्यधर्मव्याख्या चित्रा गम्भीरा वर्तते। परं मुद्रितपुस्तके सर्वत्र दोषा एव बाहुल्येन विराजन्ते, शुद्धपाठोपेतहस्तलिखितपुस्तकानि च नोपलभ्यन्त इति महदिदं विषादस्थानम्। चेट्टीव्याख्या तु सरला संक्षिप्ता च वर्तते। यत्र श्रीविजयध्वजतीर्थटीकायामस्पष्टता वा तात्पर्यविरोधो वा तत्र यथाशक्ति संशोध्य श्रीसत्यधर्मतीर्थव्याख्या, चेट्टीव्याख्या वा, अधस्तनटिप्पणे न्यवेशि। क्वचिद् दुर्घटभावदीपिकाकाराणां श्रीसत्याभिनवतीर्थानां भावोऽपि अधस्तनटिप्पणे प्रादर्शि। बन्नञ्जे गोविन्दाचार्यास्तु स्वसंपादिते भागवततात्पर्ये तत्र तत्र स्वबुद्धिकौशलेन मूलपद्यानि व्याचक्रुः। तदपि व्याकरणं क्वचिदधस्तान्निवेशितमिति तेभ्यः कृतज्ञताभावेदयामः। मा

स्कन्धस्यास्य संशोधने संपादने चैतानि पुस्तकान्युपयुक्तानि —

ड — सङ्केतेन सूचितम् — श्रीसोदामठाधीशैः श्रीविश्वोत्तमतीर्थैर्दत्तम्।

छ — ,, पुण्यपत्तनस्थावधानिरामाचार्यैर्दत्तम्।

ख — ,, श्रीबन्नञ्जे गोविन्दाचार्यप्रभृतिभिः शोधिता हस्तप्रतिकृतिः।

ग — ,, श्रीकृष्णाचार्य तम्मणाचार्य पाण्डुरङ्गिभिर्दत्तम्।

प्र — ,, श्रीव्यासनकेरे प्रभञ्जनाचार्यैर्दत्तम्।

क — ,, बेळगाव राममुद्रणालये मुद्रितम्।

ब — ,, वनमालिरायबहादूरप्रकाशितम्, वङ्गदेशे मुद्रितम्, बहुव्याख्यानोपेतं च।

## प्रकाशकवचनम्

परमपूज्यानां तपस्वितल्लजानां श्रीमध्वशास्त्रप्रवचनैकदीक्षाणां श्रीफलिमारु—भण्डारकेरे उभय-मठाधीशानां, तथा तैरेव विशेषणैरलंकृतानां तच्छिष्यमूर्धन्यानां श्रीपेजावरमठाध्यक्षाणां श्रीविश्वेशतीर्थ-श्रीपादानामनुग्रहेण समुल्लसन्तीऽयं श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः श्रीपादानामेव स्फूर्त्या प्रेरिता श्रीमद्भागवतस्य श्रीविजयध्वजतीर्थरचितपदरत्नावलीटीकासहितस्य प्रकाशने कटिबद्धा वर्तत इति धन्यतापादकोऽयं विषयः ।

एतावत्पर्यन्तं आदितः स्कन्धचतुष्टयं प्राकाश्यं नीतम् । क्रमप्राप्ततयेदानीं पञ्चमस्कन्ध एव प्रकाशितव्य आसीत् । तथापि पञ्चमस्कन्धस्य शुद्धतमा काचन मातृका अपूर्णाऽपि श्रीपेजावरमठपुस्त-कागारे वर्तत इति वार्तां श्रुत्वा तस्य लाभलोभेन तमतिहाय षष्ठस्कन्ध एव प्रकाशितः । पञ्चमस्कन्धस्य शुद्धतममातृकान्वेषणप्रयत्नः प्रचलति । अचिरादेव लभ्यते प्रकाश्यते चेति विश्वसिमः ।

ग्रन्थस्यास्य शोधने श्रीहयवदनपुराणिकप्रभृतिभिः बेङ्गलूरुनगरस्थपूर्णप्रज्ञविद्यापीठीयैर्विद्वद्भि-र्विविधमातृकाणां तुलना कृता । मैसूरुनगरे श्री पी. एस्. शेषगिरिराव् तथा डा. कि. एच् श्रीनि-वासमूर्तिः इत्येताभ्यां विद्वद्भ्यां संशोध्य संपाद्य मुद्रापितम् । पूर्णप्रज्ञविद्यापीठीयः विद्वान् अग्निहोत्री वादिराजमहोदयोऽपि अत्र कृतश्रमः । समेषामेषां विदुषां कृतज्ञेयं समितिः ।

चारित्रमुद्रणालययजमानः तत्रभवान् चन्द्रशेखरमहोदयोऽपि श्रीप्रगुन्दरमुद्रणाय सम्मानमर्हति ।

बागलिङ्गम्पल्ली
हैदराबाद्

के. सुब्बराय अडिगः
अध्यक्षः
श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः

| | | |
|---|---|---|
| हृ – | ,, | हृषीकेशतीर्थानां तात्पर्यपाठः । |
| स – | ,, | सत्यधर्मतीर्थीयव्याख्यानम् । |
| चेट्टी | ,, | चेट्टी वेङ्कटाद्रि आचार्याणां व्याख्यानम् । |

सत्यधर्मतीर्थानां सम्मतः पाठः तथा विजयध्वजतीर्थानां सम्मतं पाठान्तरं टीकायामुक्तं च 'स' इति 'वि' इति सङ्केतेन च अधस्तान्निवेशितम् ।

श्रीपूर्णप्रज्ञविद्यापीठस्य पुस्तकागाराल्लब्धान्यष्टौ पुस्तकानि चैतदतिरिक्तसङ्केतेन सूचितानि ।

स्वपुस्तकानि दत्वोपकृतवतो महाशयान् सादरं प्रणमामः ।

परिश्रमेण परिशीलनेऽपि केचन मुद्रणदोषा अत्रापरिमृष्टा वर्तन्ते । तेऽपि प्राधान्येन व-चयोः, घ-धयो, प-षयोः व्यत्यासरूपाः । तदर्थं शुद्धिपत्रिका चान्ते निवेशिता । कृपया संशोध्याध्येतव्यमिति सप्रश्रयमभ्यर्थयामहे ।

दुस्तरमिदं कार्यसागरं यदनुग्रहेण तितीर्षामस्तान् गुरून् पुनः प्रणम्य सेवामिमां भगवते समर्पयामः ।

श्री हरिगुरुचरणरजोधारिणः
संपादकाः

मैसूरुनगरम्

## विषयसूचिका

८. राज्ञा नारायणवर्मविषये विशिष्य प्रश्नः। श्रीशुकेन समाधानम्। विश्वरूपेणेन्द्राय साङ्गन्यासं नारायणवर्मोपदेशः। विद्याप्रशंसार्थं कौशिकब्राह्मणप्रसङ्गकथनम्।

९. विश्वरूपकृतवञ्चनम्। इन्द्रेण तस्य शिरश्छेदः। ब्रह्महत्यादोषप्राप्तिः। संवत्सरान्ते भूम्यादिभ्यो विभज्य दानम्। त्वष्टुर्दक्षिणाग्नेर्वृत्रोत्पत्तिः। तेन च देवानामायुधानां ग्रासः। देवैः हरि-शरणागतिः स्तोत्रकरणं च। हरेराविर्भावः। देवैः पुनः स्तुतिः। दध्यञ्चमुपसाद्य तस्यास्थिभि-र्वज्रं निर्माय तेन वृत्रं हन्तुं हरेरादेशश्च।

१०. हरेरन्तर्धानम्। इन्द्रेणागत्य दधीचिप्रार्थना। दधीचा प्रथमं नर्मवचनमुक्त्वा पश्चाद् योगेन देहत्यागः। विश्वकर्मणा वज्रनिर्माणम्। तत उभाभ्यां नर्मदातीरे युद्धाय सन्नाहः। युद्ध-प्रारम्भः। क्षिप्रहस्तैः सुरैः प्रहृतानामसुराणां युधि स्थातुमशक्तिः। ततः पलायनं च। वृत्रेण पलायतस्ताननुद्दिश्य हितवचनं च।

११. पलायमानां स्वसेनां दृष्ट्वा वृत्रस्य क्रोधः। निर्भर्त्सनवचनानि। इन्द्रेण सह युद्धम्। इन्द्रक्षिप्तां गदां गृहीत्वा तया ऐरावतकुम्भभेदः। इन्द्रमुद्दिश्य वचनम्। तेन स्वज्ञानस्वरूपाविष्कारः।

१२. इन्द्रेण वृत्रस्य युद्धम्। वृत्रप्रेषितशूलस्य वज्रिणा च्छेदः। वृत्रस्य बाहुच्छेदश्च। अपरेण बाहुना वृत्रेण परिघक्षेपः। इन्द्रहस्ताद् वज्रस्य पातः। इन्द्रं प्रति पुनर्वचनम्। इन्द्रेण वृत्रस्य हरि-भक्तेः प्रशंसा। युद्धानुवृत्तिः। वज्रेण वृत्रस्योर्वरितबाहुनाशः। वृत्रेणेन्द्रस्य सवाहस्य ग्रासः बहिरागत्येन्द्रेण वृत्रस्य कन्धरच्छेदश्च।

१३. वृत्रहननेनेन्द्रस्यानिर्वृतिः। अश्वमेधयागेन पापप्रक्षालनप्रतिश्रवस्य प्रागेव ऋषिभिः कृतस्योल्लेखः। ब्रह्महत्यया मूर्तिमत्या इन्द्रानुधावनम्। इन्द्रेण मानससरोवरं प्रविश्य पुष्करनालतन्तुष्वावासः। ब्रह्मगिरा बहिरागत्य इन्द्रेणाश्वमेधयागानुष्ठानम्। ब्रह्महत्यापापनाशश्च।

१४. असुरस्य वृत्रस्य कथमेतादृशी हरिभक्तिरिति परीक्षित्प्रश्नः। शुकेनोत्तरं दातुं चित्रकेतुकथा-प्रारम्भः। तस्य सन्तत्यभावः। नारदाङ्गिरोभ्यामागमनम्। राज्ञा सन्ततिप्रार्थना। ऋषिणा साकूतं सन्ततिदानम्। कृतद्युतेः पुत्रजन्म। अन्यासां मात्सर्यम्। कुमारस्य विषदानम्। कुमारस्य मृतिः। सर्वेषां प्रलापः। नारदाङ्गिरोभ्यां पुनरागमनम्।

१५. ऋषिभ्यां राजानमुद्दिश्य प्रबोधजनकवचनोक्तिः। ईषत्स्तिमितेन राज्ञा पृष्टाभ्यां ताभ्यां स्वस्वरूपं कथयित्वा पुना राज्ञे उपदेशः।

१६. ऋषिभ्यां मृतस्योत्थापनं; पितृभ्यां बन्धुभिर्मित्रैः सह सुखेन जीवितुमादेशः। मृतजीवेन निरभिमानेन तत्वमुपदिश्य गमनम्। राज्ञः प्रबोधः। ऋषी उपसाद्य नारदेन विद्योपदेश-

स्वीकारः । सप्तरात्रान्ते विद्याधरत्वप्राप्तिः । कदाचिच्छेषस्य सन्दर्शनम् । चित्रकेतुना तस्य स्तुतिः । प्रसन्नेन शेषेण तस्योपदेशः । अचिरात् सिद्धिं समाश्वास्यान्तर्धानं च ।

१७. एकदा गगनेचरेण चित्रकेतुना पार्वतीसहितं शिवं दृष्ट्वा उच्चैर्हासः अशोभनवचनानि च । पार्वत्याः कोपः । नीचयोनिप्राप्तिशापश्च । प्रबुद्धेन चित्रकेतुना पार्वत्याः क्षमापणम् । शिवेन विष्णुभक्तानां स्वभावप्रशंसा । चित्रकेतोः त्वष्टुर्दक्षिणाग्नौ वृत्रत्वेन जन्म ।

१८. अवशिष्टसवित्रादिवंशवर्णनम् । कश्यपस्य दित्यां सन्ततिः । दित्या इन्द्रहणपुत्राशया पत्युः शुश्रूषा । कश्यपेन वरदानप्रतिःश्रवानन्तरं दित्या स्वाभिप्रायाविष्कारः । असन्तुष्टेन कश्यपेन साकूतं पुंसवनव्रतोपदेशः । दित्या व्रतानुष्ठानम् । छिद्रान्वेषिणेन्द्रेण दितेर्गर्भच्छेदः । मरुतां जन्म । इन्द्रेण दितेः क्षमापणम् । दितेस्तुष्टिः ।

१९. राज्ञा विस्तरेण पुंसवनव्रतनिरूपणप्रार्थना । श्रीशुकेन तन्निरूपणं च ।

अञ्जनासूनुसान्निध्याद् विजयेन विराजितम् ।
अजितप्रीतिजनकं भजेऽहं विजयध्वजम् ॥

भगवद्बादरायणप्रणीतम्

# श्रीमद्भागवतम्

## षष्ठस्कन्धः

### अथ प्रथमोऽध्यायः

राजोवाच —

निवृत्तिमार्गः कथित आदौ भगवता यथा ।
क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः ॥ १ ॥

---

### श्रीमद्विजयध्वजतीर्थविरचिता पदरत्नावली

भवभयजटां[1] घोरां यस्याभिधानमघच्छिदो
वल्र्यति नृणां सद्यः संकीर्तितं स्खलनादिषु ।
अहिरिपुरहोर्हत्याद्यंहो जहौ हि यदर्चया
शरणमनिशं शान्तं कान्तं नमामि मुरद्विषम् ॥ १ ॥

अवारूढः पञ्चमस्कन्धशैलादहं षष्ठस्कन्धसिन्धावगाधे ।
अनुज्ञां वः प्रार्थये स्नातुकामो भवन्तः सन्तो गुणार्थैकलुब्धाः ॥ २ ॥

अस्मिन् स्कन्धेऽतीतस्कन्धार्थो अध्येतृप्रवक्तृश्रोतृणां फलाधिक्यप्रकटनाय संक्षिप्य निरूप्यते । तत्र प्रारिप्सितेऽध्याये सर्वाधिकारिकं सुखसाध्यं श्रीहरिप्रसादजनकज्ञानसाधनमपि भक्त्या हरेर्नामसङ्कीर्तनं पापपरिहारद्वाराऽऽवश्यकं मुक्तिसाधनमिति निरूप्यते । तदर्थं ज्ञानदरिद्रजनदयालुर्विद्वानपि परीक्षिद् येन विना पापविनाशो न स्यात् तदभावे ज्ञानानुदयः, तस्मिन् सति मोक्षमात्रमपि[2] न स्यात्, अतस्त्वया तदवश्यं वक्तव्यमितीममेवार्थं वादयितुं[3] द्वितीयस्कन्धोक्तार्थमनुवदति – **निवृत्तिमार्ग** इति । आदौ द्वितीयस्कन्धारम्भे । 'वरीयानेष ते प्रश्नः' इत्यादिना निवृत्तिमार्गः स्वस्वरूपानन्दाविर्भावलक्षणमोक्षसाधनविशेषः[4] । ननु साधनविशेषप्रपञ्चनमन्तरेण सृष्ट्यादिकथनं कुत्रोपयोगितया सङ्गच्छत इति तत्राह

---

[1] घटां–च [2] अत्र मात्रशब्दो लेशार्थः । मोक्षोऽपुनर्भवात्मक आनन्दानुभवात्मकश्चेति शास्त्रे द्विविधतया व्यवह्रियते । तत्रैकविधोऽपि मोक्षो न स्यादित्यर्थः । [3] शुकमुखेनानुवादयितुम्–क
[4] अस्य श्लोकस्थेन कथित इति पदेनान्वयः ।

प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने ।
योऽसावलीनप्रकृतेर्गुणसर्गः पुनः पुनः ॥ २ ॥

अधर्मलक्षणा नाना नरकाश्चोपवर्णिताः ।
मन्वन्तरश्च व्याख्यात आद्यः स्वायम्भुवो यतः ॥ ३ ॥

---

—यथेति । यथावत् । सृष्ट्यादिलक्षणेन दोषत्रयरहितेन लक्षितं श्रीनारायणस्वरूपं मुख्यपुरुषार्थोपयोगीत्यभिप्रायेण तत् प्रपञ्चितमिति भावः । तस्य फलमाह—क्रमयोगेति । यत् यस्मान्निवृत्तिमार्गादनुष्ठिताज्ज्ञातेन ब्रह्मणा सर्वगुणपूर्णेन श्रीनारायणेन असंसृतिः संसाराभावलक्षणं फलं भवति, जीवस्येति शेषः । कर्तृकरणयोस्तृतीयेत्यतः उभयथापि मुख्यत्वं श्रीहरेरेवेति प्रकटनाय ब्रह्मणेति तृतीया । 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः गुणपरिपूर्णतया ज्ञात एव पुरुषार्थप्रदः न निर्गुणत्वेन (ज्ञातः) इत्यतो ब्रह्मेति पदं प्रायोजि । कथं ज्ञानेनेति तत्राह—क्रमेति । क्रमेणानुष्ठितेन योगेन वैराग्यभक्तिनिरन्तरध्यानज्ञानलक्षणोपायेनोपलब्धेन दृष्टेन । प्रथमं स्मरणं पश्चादेकैकावयवध्यानं तदनन्तरं समग्राङ्गध्यानमिति वा क्रमयोगः ॥ १ ॥

'ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम्' इति प्रवृत्तिलक्षणः चशब्दात् कथितः । स किंफल इति तत्राह-- त्रैगुण्येति । त्रिगुणात्मकपुरन्दरादिदेवतास्थानप्राप्तिफल इत्यर्थः । तत् फलं किं नित्यम् ? नेत्याह—य इति । योऽसौ प्रवृत्तिमार्गः कामकर्मविदूषितान्तःकरणदोषभर्जनासमर्थत्वादलीनप्रकृतेः अविनष्टप्रकृतिशक्तेः पुरुषस्य पुनःपुनः गुणभूतस्य देहस्य सर्गो यस्मात् स तथा । सत्वादिगुणैः सर्गो यस्मादिति वा । भूयो जननमरणे प्राप्य चक्रवत् परिभ्रमणफलं ददातीत्यर्थः । अलीनप्रकृतेर्यो गुणसर्गः सत्वादिगुणनिमित्तोत्पत्तिः असावपि तृतीयस्कन्धादौ कथित इति वा योगविभागः ॥ २ ॥

अधर्मेण लक्ष्यन्ते दृश्यन्ते अनुभूयन्ते, पृथक् संज्ञावत्त्वेन क्रियन्त इति वाऽधर्मलक्षणाः । अधर्मं लक्षयन्तीति वा । नास्ति रतिः कथञ्चन[1] येषु ते नरका उपवर्णिताः, पञ्चमान्त इति शेषः । मन्वन्तरो मन्वन्तरविषयो विचारश्चतुर्थारम्भे व्याख्यातः । कोऽसाविति तत्राह—आद्य इति । आद्यः प्राथमिकः । केन सृष्ट इत्यत उक्तम्—स्वायम्भुव इति । स्वयम्भुवा कल्पितः । यतः यस्मिन् मन्वन्तरे स्वयम्भुवो जातो मनुराद्यः सर्वमनूनामाद्यभूत इति वा ॥ ३ ॥

---

[1] नास्ति रतिः क्वच येषु—छ

प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च ।
द्वीपवर्षसमुद्राद्रिनदीनदवनानि च ॥ ४ ॥

धरामण्डलसंस्थानं भागलक्षणमानतः ।
ज्योतिषां विवराणां च यथेदमसृजद् विभुः ॥ ५ ॥

अधुनेह महाभाग यथैव नरकान् नरः ।
नानोग्रयातनान् नेयात् तन्मे व्याख्यातुमर्हसि ॥ ६ ॥

---

ननु स्वायम्भुव इति सामान्योक्तौ मनुविशेषः कुतो निश्चीयते ? न च तच्छब्दादिति वाच्यम् । अश्रवणात् । न च तेनैव । स्वयम्भूजातानां सर्वेषामपि तत्संबन्धितया तच्छब्दवाच्यत्वोपपत्तेः । न च रूढ्या तदङ्गीकारः किं न स्यादिति वाच्यम्, विशेषमन्तरेण केवलया निश्चेतुमशक्यत्वात् । 'स्वायम्भुव कया वृत्त्या वर्तितं ते परं वयः' इत्यत्र नारदपरत्वेन रूढेरपहाराच्चेतीयमाशङ्का यतश्शब्दमुत्तरत्र संबद्ध्य परिह्रियते – यत इति । यतो यस्मात् । स्वायम्भुवान्मनोर्जातयोः प्रियव्रतोत्तानपदोर्वंशः तयोश्चरितानि चतुर्थे पञ्चमे च व्याख्यातानीत्यनेन स्वायम्भुवो मनुरेवोच्यत इति निश्चीयत इति । द्वीपादयश्च, पञ्चमे व्याख्याता इति शेषः ॥ ४ ॥

भागतो विभागतो लक्षणतो मानतश्च । ज्योतिषां, स्वरूपमिति शेषः । विवराणामधोभुवनानाम् । संस्थानमिति शेषः । विभुरिदं जगद् यथा येन प्रकारेणासृजत्, सोऽपि द्वितीयतृतीयादौ कथित इति शेषः ॥ ५ ॥

प्रवक्तुर्व्याख्याने हर्षोद्रेककारणाय[1] स्वस्योक्तार्थग्रहणसामर्थ्यं प्रदर्श्य विवक्षितार्थं पृच्छति— अधुनेति । अधुनेममर्थं भवन्तं पृच्छामीति शेषः । इह जीवलोके दुष्कर्माऽपि नरो यथा येन साधनेन नानोग्रयातनान् नरकान् नेयान्न गच्छेत् तदधुना दुष्कर्मपरिहारपटीयः साधनं व्याख्यातुमर्हसीत्यन्वयः । यातना तीव्रवेदनेत्यभिधानात् नानाविधा उग्रा यातनास्तीव्रवेदना येषु नरकेषु तथा तानिति नरकविशेषणमेतत् ॥ ६ ॥

---

[1] हर्षोद्रेकजननायेति यावत् ।

श्रीशुक उवाच —

न चेदिहैवापचितिं यथांहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः ।
ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ ७ ॥

तस्मात् पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद् यदात्मनः[1] ।
दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ॥८॥

राजोवाच —

दृष्टश्रुताभ्यां यत् पापं जानन्नप्यात्मनोऽहितम् ।
करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥ ९ ॥

---

'न चेदिहावेदीन्महती विनष्टिः' इति श्रुत्यर्थं पश्यन् प्रवक्ति—न चेदिति । यः[2] पुरुष-मनउक्तिपाणिभिः मनोवाक्कायैः कृतस्यांहसोऽपचितिं प्रायश्चित्तोपलक्षणं[3] नाशमिहैव न कुर्याच्चेत् तर्हि स पापी प्रेत्य नरकानुपैतीत्यन्वयः । कीदृशान्? अत्राह– ये कीर्तिता इति । वा इत्यनेन पारम्पर्येणेती-ममर्थमाह । कथङ्कारमपचितिः स्यादित्यत उक्तम्—यथेति । अंहसो गुरुलाघवं यथा तथा प्राय-श्चित्तकरणमित्यर्थः । न चेदमौपचारिकं (किन्तु) ध्रुवं निश्चितमिति । यस्मिन् जन्मनि आचरितं तस्मिन् प्रायश्चित्तं चेत्कृतवत् क्षिप्रं गुरुदोषनिवृत्तिलक्षणफलदमिति एवेत्यनेन दर्शयति ॥ ७ ॥

यस्मादेवमनर्थप्राप्तिस्तस्माद् देहवियोगात् पूर्वमेव कालक्षेपमन्तरेण पापनिष्कृतौ पापपरिहारे यतेत । यतनमपि मध्यमे वयस्येवेत्यभिप्रायेणोक्तम्—अविपदिति । बाल्ये वार्धके वा दौर्बल्यलक्षणविपत्तिः संभवात् तारुण्ये तदयोगात् समर्थ इत्यर्थः । अनेन द्रव्यादिसंपत्तावेव (न) प्रयतनीयमिति ध्वनितम् । यथेत्युक्तं विवृणोति—यदात्मन इति । आत्मनो दोषस्य यद् गुरुत्वं लघुत्वं च तद् दृष्ट्वा तदनुसारे-णेत्यर्थः । अत्रैव दृष्टान्तमाह—यथेति । रुजां रोगाणां 'निदानं त्वादिकारणम्' इत्यभिधानात् मूलनिमित्तज्ञानी भिषग् वैद्यो यथा चिकित्सेत चिकित्सते । आत्मनो दोषस्य गुरुलाघवज्ञानाभावे तद् गुरुमुखादपि ज्ञात्वा कर्तव्यमिति सूचितमनेन दृष्टान्तेन । यद्वा यत् यावदात्मनो देहस्य मृत्योस्सकाशात् यन्मरणलक्षणविपन्न भवति तस्मात् तावत् पुरैव पापस्य गुरुलाघवज्ञानपूर्वकं निष्कृतौ यतेत । इममर्थं सदृष्टान्तमाह—दोषस्येति ॥ ८ ॥

राजा निष्कृतेर्वैयर्थ्यं शङ्कते—दृष्टेति । चौर्यादिकारिणो राजदण्डादिदर्शनेन । 'मृतो नरक-

---

[1] अविपद् यतात्मना; अविपद्गताऽऽत्मना–स [2] स—च [3] प्रायश्चित्तलक्षणं–क

क्वचिन्निवर्ततेऽभद्रात् क्वचिच्चरति तत् पुनः ।
प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत् ॥ १० ॥

श्रीशुक उवाच —

कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात् प्रायश्चित्तविमर्शनम् ॥ ११ ॥

नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि ।
एवं नियमकृद् राजञ्छनैः क्षेमाय कल्पते ॥ १२ ॥

---

मभ्येति ह्यगम्यागमनान्नरः ' इति श्रुतेः । स चात्मनः पापमहितं दुःखसाधनं जानन्नपि विवशः स्वकर्माधीनः भूयः पश्चादपि पापं करोतीति यद् यस्माद् अथो तस्मात् प्रायश्चित्तं कथं भवतीत्यन्वयः ॥ ९ ॥

असंभवं विवृणोति —क्वचिदिति । क्वचिदभद्रात् प्रायश्चित्तेन निवर्तते । क्वचित् तत्सदृशमभद्रमाचरतीति यदथो तस्मात् प्रायश्चित्तम् अपार्थं मन्ये । निष्प्रयोजनत्वे कुञ्जरशौचवदिति दृष्टान्तः । शौचेन स्नानं लक्षयति ॥ १० ॥

प्रायश्चित्तलक्षणं कर्मापार्थमिति वदन् किं केवलं व्यर्थमुत विद्वद्भिर्विमृश्य विहितमाहोस्विज्ज्ञानपूर्वकमपि क्रियमाणं तदिति[1] । तत्राद्यः सम्मत इत्याह- -कर्मणेति । प्रायश्चित्तलक्षणेन कर्मणा कर्मनिर्हारः पापकर्मविनाश आत्यन्तिकः छिन्नमूलत्वेन नेष्यते । उभयोरप्यज्ञानमूलत्वेनाधिकृतत्वात् । द्वितीयं न व्यर्थमित्याह—प्रायश्चित्तेति । विद्वद्भिरविदुषोऽधिकृत्य प्रायश्चित्तं कर्मविमर्शनं[2] कृत्वा विहितं कर्म व्यर्थं नेष्यत इति पूर्वेणान्वयः[3] ॥ ११ ॥

तृतीये इदं पापमिति जानता तदकुर्वाणेन स्वविहितं क्रियमाणमुत मया कृतं पापमिति ज्ञात्वा तस्येदं प्रायश्चित्तमिति जानतेति पक्षद्वयेऽपि क्रियमाणं कर्म न व्यर्थं किन्तु सार्थकमिति भावेनाह—

---

[1] एतदनन्तरं अभिप्रैति ? इत्युपस्कर्तव्यम् । [2] प्रायश्चित्तकर्मविमर्शनमिति स्यात् ।

[3] कर्मणा प्रायश्चित्तरूपकर्मणा आत्यन्तिकः कर्मनिर्हारः कर्मोच्छेदः प्रामाणिकैः, हिशब्दोऽवधारणे, न हि नैव, इष्यते । कुत इत्यत आह—अविद्वदधिकारित्वादिति । अविद्वदित्यत्र विद्यमानोऽकारो ब्रह्मवाची । आत्यन्तिककर्मनिर्हारस्य ब्रह्मापरोक्षज्ञान्यधिकारि(क)त्वात् । तर्हि प्रायश्चित्तानुष्ठानं व्यर्थं स्यादित्यत आह—प्रायश्चित्तेति । प्रायश्चित्तेन विमर्शनं भगवदपरोक्षज्ञानं भवति । एतदेव विवृणोति—नाश्नत इति । हे राजन् । यथा पथ्यमेवान्नमश्नतो व्याधयो नाभिभवन्ति । किन्तु क्षेम एव भवति । एवं तथा नियमकृत् प्रायश्चित्तकृत् शनैः क्षेमाय कल्पते । भगवदपरोक्षज्ञानं प्राप्य तन्निमित्तकात्यन्तिककर्मोच्छेदं च प्राप्य मोक्षाय कल्पत इत्येतद्धि कर्मणा ज्ञानमातनोतीत्यादिप्रमाणसिद्धमिति—इति सत्याभिनवतीर्थाः

तपसा ब्रह्मचर्येण शमेन च दमेन च ।
त्यागेन सत्यशौचाभ्यां नियमेन यमेन च ॥ १३ ॥

देहवाग्बुद्धिजं धीरा धर्मज्ञा श्रद्धयाऽन्विताः ।
[1]क्षपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ १४ ॥

केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १५ ॥

न तथा ह्यघवान् राजन् पूयेत तपआदिभिः ।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥

सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १७ ॥

---

**नाश्नत इति** । एवमिति वचनाद् यथेत्यध्याहर्तव्यम् । पथ्यमेवान्नमश्नतः पुंसो व्याधयो नाभिभवन्ति यथा, देहमिति शेषः । 'अत्यम्बुपानाच्च न जीर्यतेऽन्नमनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि' इत्यादिविधानं हिशब्देनाक्षिप्तं स्पष्टयति—**एवमिति** । नियमकृत् पापकर्माकुर्वन् स्वविहितं कुर्वन् शनैर्बहुजन्मात्यये पुण्यप्रचयेन ज्ञानोत्पत्तौ क्षेमाय कल्पते मोक्षाय समर्थो भवति ॥ १२ ॥

ज्ञानेन तपआदिप्रायश्चित्तकर्मणा महदघं [2]क्षपन्तीत्यन्वयः ॥ १३ ॥

दुर्बलकायादिमतां तपआद्याचरणाशक्तानां केन पापक्षयः स्यादिति तत्राह—**केचिदिति** ॥ १५ ॥

इदमशक्ताधिकारिकं चेन्निकृष्टं किम् ? न । किन्तु ततोप्युत्तममिति भावेनाह—**न तथेति** । कृष्णेऽर्पिताः प्राणाः श्रोत्रादयो यस्य स तथा । कृष्णार्पितप्राणत्वं केन स्यात् ? अत्राह—**तत्पूरुषेति** । तस्य कृष्णस्य पूरुषाः तेषां निषेवया । 'भक्त्या त्वनन्यया शक्यः' इत्यादिप्रसिद्धिं हिशब्देन दर्शयति ॥ १६ ॥

अत्र त्रिषु दुष्कृतपरिहारमार्गेषु भक्तिमार्गस्यैव प्राधान्यमित्याह—**सध्रीचीन इति** । लोके प्रायश्चित्तलक्षणसाधनसमूहे । आनन्दरूपत्वात् क्षेम इत्युच्यते । तत्राधिकारिण आह—**सुशीला इति** ॥ १७ ॥

---

[1] क्षिपन्ति–स  [2] क्षपयन्तीत्यन्वयः–क

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखैः ।
न वै पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः[1] ॥ १८ ॥

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
दूतानां विष्णुयमयोः संवादं तं निबोध मे ॥ २० ॥

कान्यकुब्जे[2] द्विजः कश्चिद् दासीपतिरजामिलः ।
नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥

---

तपआदीनामपि भक्त्योपचितबलानां पापनिर्हरणहेतुत्वं न केवलानामित्यतोऽपि भक्तेरेव प्राधान्यमित्याह—प्रायश्चित्तानीति ॥ १८ ॥

ननु केवलभक्त्या पापनिर्हरणप्रकारः कथम् ? अत्राह—सकृदिति । पापनिर्हरणं तपआदाविव चिरसाध्यं न भवति, किन्तु क्षिप्रसाध्यमित्यतो वा भक्तेः प्राधान्यमित्याह—सकृदिति । कृतपापानुतापपूर्वकं श्रीकृष्णाङ्घ्रिपद्मे सकृन्मनोनिवेशनेन चीर्णनिष्कृताः कृतप्रायश्चित्ताः ॥ १९ ॥

नन्वेवं वैदिकानामस्तु । अवैदिकानां स्त्रीशूद्रादीनां पापप्रायश्चित्तं कथं स्यादित्याशङ्क्य भक्त्या तेषां नामसङ्कीर्तनेन दुष्कृतनिष्कृतिः स्यादितीममर्थमितिहासेन दर्शयति—अत्रेति[3] । भक्त्या (सकृद्) भगवन्नामसङ्कीर्तनादपि दुष्कर्मनाशः स्यात् किमु वक्तव्यं निरन्तरमेकमनस्कत्वेन श्रीहरिचरणस्मरणादिनेत्यतो वेममर्थमाख्यायिकया दर्शयति– अत्रेति । अत्र वैदिकानामवैदिकानामपि भक्त्या नामसङ्कीर्तनादघक्षये । एवकारेणायोगं व्यवच्छिनत्ति । न त्वन्ययोगम् । तथात्वे पूर्वोक्ता व्यर्थाः स्युरित्यर्थः ॥ २० ॥

अजया प्रकृत्या ज्ञानस्य मीलो मीलनं तिरोभावो यस्य स तथा । पश्चादजाद्धरेः पूर्वपुण्यसंपन्नज्ञानस्य मीलः उन्मीलनं यस्य स तथेत्युभयथा वाऽजामिलत्वं युक्तम्[4] । ह्रस्वत्वं छान्दसम् । सन् समीचीन आचारः सदाचारः ॥ २१ ॥

---

[1] आपगा – स [2] कन्याकुब्जे – क च छ

[3] व्याजतोऽपि हर्यादृयव्याहरणं दुरितदूरीकरणकारणधुरीणं यदा तदा किमुदाहर्तव्यं तदेकतानमानसेन सदा तदाराधनादिसाधनवतां महतामंहस्संहारो भविष्यतीत्यत्र निदर्शनप्रदर्शनायेदम् । —स

[4] अजा मिलति श्लिष्यति स्वकार्येण यं सोऽजामिलः । मिल श्लेषणे इति धातोः । अजो विष्णुः आ सम्यक् मिलति यम् इत्यपि निरुक्ती छान्दसह्रस्वत्वमनाश्रित्यापि सुमिले—स

बन्द्यक्षैः कैतवैश्चौर्यैर्गर्हितां वृत्तिमाश्रितः ।
बिभ्रत् कुटुम्बमशुचिर्यातयामास देहिनम् ॥ २२ ॥

एवं निवसतस्तस्य लालयानस्य तत्सुतान् ।
कालोऽत्यगान्महान् राजन्नष्टाशीत्यायुषः समाः ॥ २३ ॥

तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः ।
बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥

स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ।
निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥ २५ ॥

भुञ्जानः प्रपिबन् खादन् बालकस्नेहयन्त्रितः ।
भोजयन् पाययन् मूढो न वेदागतमन्तकम् ॥ २६ ॥

स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते ।
मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥

स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् ।
वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ २८ ॥

---

बन्दिग्रहणैरक्षैर्देवनैः, 'कितवः स्यादनृतवादी कैतवं तस्य भाषणम्' इत्यभिधानात् असत्य-व्यवहारैः, चौर्यैः परस्वापहरणलक्षणव्यापारैः वृत्तिं वर्तनं जीवनोपायम् । देहिनं यातयामास नरकगमनाभिमुखमकरोत्, शरीरयात्रायुक्तमकृतेति वा ॥ २२ ।

अष्टाशीत्यायुषो याः समाः ये संवत्सराः तत्परिमाणलक्षणः कालः ॥ २३ ॥

अवमः कनिष्ठः ॥ २४ ॥ अन्तकं मृत्युम् ॥ २६ ॥

मृत्युकाले देहवियोगलक्षणकाले मृत्योः सर्वदोषापहरस्य हरेरनुग्रहात् काले दत्तज्ञानलक्षणे (?) उपस्थिते हृदि प्रकाशिते 'तनये पूर्णज्ञाने बाले पञ्चवर्षकल्पे प्रादेशमात्रे नारायणाह्वये मूर्तिविशेषे मतिं स्मरणसमर्थं चित्तं चकार । भक्त्याऽस्मरदित्यर्थः । 'अजामिलोऽपि स्मरणाद् भक्त्या मृत्योरमुच्यत' इत्येतद् वाक्यम् अशेषाघहरं विदुरित्यत्र प्रमाणत्वेन वक्ष्यमाणमत्रानुसन्धेयमिति ज्ञातव्यम् ॥ २७ ॥

---

[1] 'तनु विस्तारे' 'येति ज्ञानं समुद्दिष्टम्' इति धातुव्याख्यान-प्रमाणाभ्यामयमर्थः सूचितः ।

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ।
प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २९ ॥
निशम्य म्रियमाणस्य मुखतो हरिकीर्तनम् ।
भर्तुर्नाम महाराज पार्षदाः सहसाऽपतन् ॥ ३० ॥
विकर्षतोऽन्तर्हृदयाद् दासीपतिमजामिलम् ।
यमप्रेष्यान् विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥
ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरस्सराः ।
के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥
कस्य वा कुत आयाताः कस्मादस्य निषेधथ ।
किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ॥ ३३ ॥
सर्वे पद्मपालाशाक्षाः पीतकौशेयवाससः ।
किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः ॥ ३४ ॥

प

---

दूरे अण्डाद्बहिःस्थितं जगत्सर्जनादिलीलाविलासोपेतं पुन्नाम्नो नरकात् त्रातारं नारायणनामानम् । उच्चैः प्लावितेन त्रिचतुरादिमात्रात्मना स्वरेण । पूर्वाचरितपुण्यप्रचयेनोत्पन्नया भक्त्याऽऽकुलेन्द्रियः ॥ २९ ॥

हरेः कीर्तनं किं गुणरूपम्[1] ? नेत्याह—भर्तुरिति । भर्तुः स्वामिनो नारायणेतिनामरूपम्[2] । दोषहरणशीलं कीर्तनं यस्य नाम्नस्तद्धरिकीर्तनं भर्तुर्नाम निशम्येति वा । हरिरित्यक्षरद्वयं नारायणेत्यक्षरचतुष्टयम् अनेनोक्तमिति ज्ञापनायानन्वितत्वेनोक्तमिति वा[3] । अनेन पुत्रस्नेहमन्तरेण प्राचीनादृष्टबलादुद्भूतया भक्त्या भगवन्नामसंकीर्तनं कृतमिति ज्ञायते ॥ ३० ॥

ओजसाऽवष्टम्भेन बलेन वा । 'ओजोऽवष्टम्भबलयो'रिति यादवः ॥ ३१ ॥

निषेधथ, अस्य, नयनमिति शेषः ॥ ३३ ॥

---

[1] गुणकीर्तनरूपमित्यर्थः स्यात् ।

[2] नामकीर्तनरूपमित्यर्थः । यद्यपि सर्वाणि नामानि 'यच्छब्दा योगवृत्तयः' इति न्यायेन गुणकीर्तनान्येव । तथापि स्थूलमतीनां दृष्ट्या प्रश्नः परिहारश्च ।

[3] अस्मिन् कल्पे हरिकीर्तनमित्येतद् भर्तुर्नामेत्यस्य विशेषणं नेत्यभिप्रायः ।

सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ।
धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः ॥ ३५ ॥

दिशो वितिमिरालोकाः कुर्वन्तः स्वेन रोचिषा ।
किमर्थं धर्मपालस्य किङ्करान् नो निषेधथ ॥ ३६ ॥

श्रीशुक उवाच —

इत्युक्ते यमदूतैस्ते वासुदेवोक्तकारिणः ।
तान् प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा ॥ ३७ ॥

विष्णुदूता ऊचुः —

यूयं वै धर्मराजस्य यदि निर्देशकारिणः ।
ब्रूत धर्मस्य नस्तत्त्वं यच्चाधर्मस्य लक्षणम् ॥ ३८ ॥

कथंस्विद् ध्रियते दण्डः किं वाऽस्य स्थानमीप्सितम् ।
दण्ड्याः किं कारिणः सर्वे अहोस्वित् कतिचिन्नृणाम् ॥ ३९ ॥

यमदूता ऊचुः —

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम[1] ॥ ४० ॥

---

नूत्नवयसः षोडशवर्षवयसः । धनुरादिभिः श्रीर्येषां ते तथा ॥ ३५ ॥

वितिमिरालोका इत्यत्र वीत्युपसर्गः प्रत्येकमभिसंबद्ध्यते । विगतानि तिमिराणि विगता आलोका अन्यप्रकाशाश्च यासु दिक्षु तास्तथा निरस्तान्धकारान्यप्रकाशा इत्यर्थः ॥ ३६ ॥

तत्त्वमनारोपितं रूपम् । लक्षणं व्यावर्तकधर्मम् ॥ ३८ ॥

कथंस्वित् केन प्रकारेण । स्थानं देशः, विषयो वा । नृणां मध्ये कारिणः कर्मकारिणः सर्वेऽपि दण्ड्याः किमाहोस्वित् कतिचिदेव दण्ड्याः ? तत्रापि किंकारिणो वा किमकारिणो वा इति ब्रूत ॥ ३९ ॥

यच्चाधर्मस्य लक्षणमित्यत्राहुरित्याह — वेदेति । वेद एव धर्माधर्मौ मिथो व्यावर्त्य वक्तीत्यनेन प्रमाणं चोक्तम् । धर्मस्य तत्त्वं ब्रूतेत्यत्रोत्तरमाहुरित्याह — वेदेति । वेदो नारायणवक्तृकः । तपःशक्त्या दृष्टवेदवक्तृमुनिव्यावृत्त्यर्थं साक्षादिति । तदुक्तम् — ' वेदानां प्रथमो वक्ता हरिरेव यतो विभुः ।

---

[1] शुश्रुमः इत्यपि स-पाठः ।

येन स्वधाम्न्यमी भावा रजस्सत्वतमोमयाः ।
गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥ ४१ ॥

सूर्योऽग्निः खं मरुद् गावः सोमः सन्ध्याहनी दिशः ।
कालः स्वयं धर्म इति ह्येते धर्मस्य साक्षिणः ॥ ४२ ॥

एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते ।
सर्वे क्रमानुरोधेन दण्डमर्हन्ति कारिणः ॥ ४३ ॥

---

अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिनः' इति । देवदत्तवन्नारायणोऽपि 'किमन्यस्मादवाप्तदेह इति[1] नेत्याह—स्वयम्भूरिति । अनेन नारायणवक्तृत्वे पौरुषेयत्वेनानारोपितरूपत्वाभावेन तदुक्तधर्माधर्मनिश्चयायोग इत्याशङ्का परिहृता । तेषां स्वयम्भूत्वेनाभिव्यक्तिरेव हरेर्नतु पुराणादिवदन्यथा रचितत्वम् । 'यावद् ब्रह्म विष्ठितं तावती वाक्' इति श्रुतेः[2] ॥ ४० ॥

नन्वेतावता नारायण इतरस्मात् कथं व्यावृत्ततया ज्ञायत इति तल्लक्षणमाह—येनेति । स्वधाम्नि स्वाधारतया । गुणाः शुक्लादयः । नामान्यश्वमहिषदेवदत्तादीनि । क्रियाः पचतिपठतीत्यादयः । रूपाणि द्विपाच्चतुष्पादित्यादीनि । क्रिया पञ्चविधं कर्मेति वा[3] । गुणाः शमदमादयः । रूपाणि शुक्लादीनि । यथातथमसाङ्कर्येण विभाव्यन्त उत्पाद्यन्ते ॥ ४१ ॥

किं वाऽस्य स्थानमीप्सितमित्यत्राहुरित्याह—सूर्योऽग्निरिति । गाव आपः । 'गौर्भूमिरापः' इति वचनात् । सन्ध्या चाहश्च सन्ध्याहनी । कालाभिमानी देवः । स्वयं पापपुण्ययोः कर्ता । देवशब्दवाच्यः श्रीहरिर्वा कालः । हृदयं मन इति द्वे स्वयमित्यनेन व्याख्याते[4] । धर्मस्येत्युपलक्षणम् अधर्मस्यापि । साक्षादीक्षन्त इति साक्षिणः ॥ ४२ ॥

धर्माधर्मलक्षणपुण्यपापदर्शिभिरेतैः सूर्यादिभिः । न धर्मो यस्य सोऽधर्मः, अधर्म इति विज्ञातो

---

[1] किमिति इतीति वाऽधिकमिति भाति ।

[2] न च ऋग्वेद एवाग्नेरजायतेत्यादिना पौरुषेयत्वोक्तेस्तद्दोषप्रयुक्तदोषवत्त्वप्रसक्तेरविश्वसनीयत्वात् कथं तस्यैतदर्थे (धर्माधर्थे) प्रमाणीकरणमित्यत आह—स्वयंभूरिति । स्वयं भवति स्वयं भगवता सदा सत्तावानिति स तथा । अग्न्यादयस्तद्व्यञ्जकतामात्रेण जनकतयोच्यन्त इति न विरोध इति भावः । स्वयंभूरिति नारायणविशेषणं सद् वक्तृवाच्यानुरूप्यं वोधयतीत्यपि ज्ञेयम् । तदपि स्वयंभवनं वेदस्वयंभवनवदितराधीनं किम् ? नेत्याह—साक्षादिति ।—इति स.

[3] इति वेत्येतत् शुक्लादीनीत्यनन्तरं संबध्यते ।

[4] 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तिम् ।' इति विष्णुपुराणस्थं श्लोकमभिप्रयन्ति विजयध्वजतीर्थाः ।

संभवन्ति ह्यभद्राणि विपरीतानि चानघाः ।
कारणं गुणसङ्गोऽस्ति देहवान् न ह्यकर्मकृत् ॥ ४४ ॥
येन यावान् यथा धर्मो ह्यधर्मो वा समीहितः ।
स एव तत्फलं भुंक्ते तथा तावदमुत्र वै ॥ ४५ ॥
यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते ।
भूतेषु गुणवैचित्र्यात् तथाऽन्यत्रानुमीयते ॥ ४६ ॥

---

यः पुरुषः स एव दण्डस्य स्थानं दण्ड्य इति युज्यते । यमस्तु दण्ड एवाधिकृतः । कथंस्विद् ध्रियते दण्ड इत्यस्योत्तरमाहुरित्याह—सर्वे इति । कारिणः पापकारिणः । सर्वे क्रमानुरोधेन[1] पापकर्मतारतम्यानुकूल्येन दण्ड्याः । किंकारिणः सर्वे इत्यत्राहुरित्यतो वाऽऽह—सर्वे इति । पापकारिणः सर्वे दण्डमर्हन्तीत्यनेन पापकारिण एव यमेन दण्ड्याः न पुण्यकारिण इति च ग्राह्यम् ॥ ४३ ॥

ननूभयेषामपि दृष्टश्रुताभ्यामैहिकसुखदुःखफले जानतामुभयविधकर्मसंभवः कथम् ? अत्राह—संभवन्तीति । विपरीतानि पापविरुद्धपुण्यानि राज्याद्यवाप्तिनिमित्तसुखफलप्रदानि । 'आचतुर्दशमाद् वर्षात् कर्माणि नियमेन तु । दशावराणां देहानाम् ....'[2] इत्येतत् हिशब्दगृहीतम् । संभवेऽपि किं कारणम् ? अत्राह—कारणमिति । त्रिगुणसंबन्ध एव कारणमिति भावः । नन्वेतल्लिङ्गशरीरिण्यनैकान्त्यं तस्य कर्माकरणादित्याशङ्क्य स्थूलदेहविवक्षयोक्तमिति भावेनाह—देहवानिति । यो गुणसङ्गेऽपि पुण्यवान् न कर्म करोति ज्ञानात्[3] इति चेत् तत्राह—देहवानिति वा । देही चेदकर्मकृन्नास्त्येव । गुणानां तादृशशक्तिमत्त्वात् । 'कार्यते ह्यवशः .... इत्युक्तेः ॥ ४४ ॥

किमत इत्यतः फलितमाह—येनेति । अमुत्र परलोके ॥ ४५ ॥

ननु 'यावज्जीवं सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य पुनरागमनं कुतः' इति वचनात् स एवामुत्र स्वकृतं भुंक्त इति न घटत इत्यत्राह—यथेहेति । स्वकृतफलदातारो दृश्यन्ते, प्रमाणत इति शेषः । वाक्यप्रामाण्यानङ्गीकारेऽपि प्रत्यक्षगृहीतव्याप्तिकानुमानात् सिद्धमित्याह

---

[1] रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुंभीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ संप्रकीर्तितौ । एतानि क्रमशो ज्ञातवैरारोहोथावरोहगमिति भारतोक्तक्रमानुसारेण दण्डमर्हन्तीत्यर्थं इति चेट्टी ।

[2] कारणानि करोत्ययमिति प्रमाणवाक्यशेषः ।

[3] ज्ञानादित्यनन्तरमतस्तत्रानैकान्त्यमित्युपस्कर्तव्यम् ।

वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ।
एवं जन्मानयोरेतद् धर्माधर्मनिदर्शनम् ॥ ४७ ॥

मनसैव पुरे देवः पूर्वरूपं विपश्यति ।
अनुमीमांसतेऽपूर्वं मनसा भगवानजः ॥ ४८ ॥

यथाऽज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि ।
न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥

---

—त्रैविध्यमिति । सत्त्वादिगुणानां वैचित्र्याद् भूतेषु उत्तममध्यमाधमत्वभेदेन त्रैविध्यमुपलभ्यते यथा प्रत्यक्षेणेति शेषः । अन्यत्र जन्मान्तरे परलोके वा[1] ॥ ४६ ॥

अनुमानस्य प्रामाण्यं साधयितुम् एतदर्थे दृष्टान्तमुपस्थापयन्नाह — वर्तमान इति । वर्तमानः प्रतीयमानः वसन्तादिकालः, अन्ययोः अतीतैष्यद्वसन्तयोः गुणानां पल्लवादिकार्याणाम् अभिज्ञापको यथा तथैवेदं वर्तमानं जन्म धर्माधर्मज्ञापकम् । अनयोरतीतागतजन्मनोः यौ धर्माधर्मौ तौ नितरां दर्शयति ज्ञापयतीति धर्माधर्मनिदर्शनम् ॥ ४७ ॥

ईशस्याप्यनुमानं प्रमाणमिति ज्ञापयितुं जीवसमवेतधर्माधर्मसद्भावे हरेः प्रत्यक्षं प्रमाणमस्तीत्याह — मनसेति । पुरे जीवशरीरे स्थितो देवः श्रीनारायणः जीवस्य पूर्वरूपमपूर्वम् अनागतरूपं च तत्समवेतधर्माधर्मौ च स्वमनसैव विपश्यति अपरोक्षीकृत्य वर्तते । दर्शनस्य क्वापि बाधो नास्तीति तत्त्वधीः । अन्येषामदर्शनमेव किम् ? नेत्याहुरित्याह — अनुमीमांसत इति । अजः परमेष्ठी भगवान् मनसाऽनुमीमांसते तत्तत्प्रकारमालोच्य विचार्य पश्यतीत्यर्थः । सर्वजीवसाधारणाजज्ञत्वाद्योगाद्देवा अपि यथायोग्यं जानन्तीति भावः । किञ्च जीवात्मनोऽपि धर्माधर्मसमवेतपूर्वापरत्वे वर्तमानवत् सिद्धे इत्याहुरित्यतो वाह — मनसेति । सुरनरतिर्यगादिपुरे देवः श्रीजन् भगवान् भाग्यगुणोपेतो जीवः पूर्वानुभवसंस्कारसंस्कृतेन मनसैव पूर्वरूपं धर्माधर्मसमवायात्मकं स्वं विपश्यति विजानाति । अपूर्वमनागतं मनसाऽनुमीमांसते विचार्यानुमिनोति । 'अजो ह्येको जुषमाणोऽनुशेते' इति श्रुतेः ॥ ४८ ॥

पूर्वापरत्वे जानाति चेत् तर्हि कथमन्यत्र मृतोऽन्यत्र जातोऽहमिति न जानातीत्याशङ्क्य श्रीनारायणानुग्रहमन्तरेण तादृशज्ञानं न सुलभं सर्वेषामित्यभिप्रेत्याह — यथेति । अज्ञोऽविवेकी

---

[1] हे देवप्रवर! इह संसारे भूतेषु प्राणिषु गुणवैचित्र्यात् त्रैविध्यं गुणत्रयप्रयोजकं फलमुपलभ्यते । दुःखी सुखी सुखदुःखवानिति त्रिविधमुपलभ्यते प्रत्यक्षादिना निश्चयीक्रियते । तथाऽमुत्र पुनर्जन्मानि परत्रानुमीयते—इति सः

पञ्चभिः कुरुते स्वार्थान् पञ्च वेदाऽथ पञ्चभिः ।
एकस्तु षोडशेन त्रीन् स्वयं सप्तदशोऽश्नुते ॥ ५० ॥

तदेतत् षोडशकलं लिङ्गं शक्तित्रयं महत् ।
धत्तेऽनु संसृतिं पुंसि हर्षशोकभयार्तिदम् ॥ ५१ ॥

देह्यज्ञोऽजितषड्वर्गोऽनिच्छन् कर्माणि कार्यते ।
कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥ ५२ ॥

---

अव्यक्तं प्रकृतिनिर्मितदेहमेवोपास्ते देहात्मनोरभेदं कल्पयति । व्यक्तमेव पुरःस्थितमेव जानाति न तु पूर्वापरे इति वा । तत्र कारणमाहुरित्याह—तमसेति । विपरीतप्रत्ययापादकतमोगुणयुक्तत्वात् । अत एव पूर्वमपरं च न वेद यथा, तथा नष्टजन्मविषयस्मृतिः पुरुषोऽन्यत्र जात इत्यादिकं न जानातीत्यर्थः । अनेन 'यावज्जीवं सुखं जीवेत् .... ....' इति चार्वाकमतमज्ञप्रलपितमिति ज्ञायत इति भावः ॥ ४९ ॥

देही चेत् कर्म करोत्येवेत्युक्तम् । तत्र कर्मकरणप्रकारं दर्शयति—पञ्चभिरिति । पञ्चभिर्वागादिकर्मेन्द्रियैः स्वार्थान् स्वविषयानभिवदनशिल्पगतिविसर्गानन्दाख्यान् । पञ्चभिः श्रोत्रादिज्ञानेन्द्रियैः पञ्च शब्दादीन् । सप्तदशः स्वयमेक आत्मा षोडशेन षोडशभेदयुक्तेन लिङ्गशरीरेण त्रीन् सत्त्वादिगुणैस्त्रिधा विभक्तं सुखं दुःखं मिश्रं च भुङ्क्ते । सत्त्वं सुखे सञ्जयतीत्यादेः । देहात्मनोर्भेदप्रकाशनाय सप्तदश इत्युक्तम् ॥ ५० ॥

तर्हि कस्मात् संसारोऽस्येति तत्राह—तदेतदिति । षोडश कलाः श्रोत्रादीन्द्रियाणि मनश्च पञ्चभूतानि यस्मिन् तत् तथा । शक्तीनां प्रकाशक्रियावरणलक्षणानां त्रयं यस्मिंस्तत् तथा, सत्त्वादिगुणशक्तियुक्तमित्यर्थः । अत एव महापुरुषार्थाभिभवसमर्थम् । त्रिशक्तियुक्तत्वाद् हर्षादिप्रदं लिङ्गं लिङ्गशरीरं पुंस्यनु स्वकर्मानुकूल्येन संसृतिं धत्त इत्यन्वयः । अधिकरणत्वमात्रप्रदर्शनाय पुंसीति सप्तमी । तस्मादभिमाननिमित्तमिदं सर्वमित्यर्थः ॥ ५१ ॥

आत्मनः संसारप्रकारं निरूपयति—देहीति । अवशीकृतषडिन्द्रियवर्गोऽनिच्छन्नपि कर्माणि कार्यते, गुणाधीनषडिन्द्रियैरिति शेषः । विष्टिगृहीतवद् बलात् कार्यमाणश्चेत् स्वसंपद्विपदौ वेत्ति

---

हे देवप्रवरा यथेह जन्मनि भूतेषु प्राणिषु सत्त्वादिगुणानां वैचित्र्यात् सात्त्विकादिकर्मवैचित्र्यं दृश्यते तथाऽन्यत्र जन्मान्तरेपीत्यनुमीयते । शरीरत्वावच्छिन्नशरीरस्य गुणजन्यत्वनियमात् । गुणसंगस्य कर्मकारणत्वादित्यर्थः । इति चेट्टी । [१] त्याहुरिति वाह इति स्वरसम् ।

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५३ ॥

लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ।
यथायोनि यथाबीजं स्वभावेन बलीयसा ॥ ५४ ॥

---

किम् ? नेत्याह—कोशकार इति । यथा कोशकारः कृमिः स्वकर्मणा निर्मितकोशेनात्मानमाच्छाद्य मुह्यतीत्यर्थः[1] ॥ ५२ ॥

मोहोऽस्यास्तीति कुतो ज्ञायत इत्याशङ्क्य पुनःपुनः कर्मकरणादित्यभिसन्धिमन्तः स्वोक्तार्थे प्रमाणं दर्शयन्तीत्याह—नहीति ॥ ५३ ॥

जननमरणे अपि देहस्यैव, आत्मनस्तदभिमानादुपचर्येते इत्याहुरित्याह—लब्ध्वेति । संसारनिमित्तमव्यक्तं प्रकृतिकार्यं शरीरं लब्ध्वा व्यक्ताव्यक्तमुत जन्ममरणमपि भवति, जीवस्योपचारत इति शेषः । 'देहस्य सर्वथा नाशादनाशाच्चेतनस्य च' इत्यादेः । निमित्तं कारणमव्यक्तं प्रकृतिं लब्ध्वा प्राप्य व्यक्ताव्यक्तं जन्ममरणात्मकं शरीरं भवति, जीवस्येति शेषः इति वा । कथम् ? यथायोनि पश्वादियोनिमनतिलङ्घ्य । यथाबीजं कर्मराशिमनतिक्रम्य । सत्वादिनिमित्तस्वभावेन[2] ॥ ५४ ॥

---

[1] अजितषड्वर्गः अजितोऽस्वाधीनीकृतः षड्वर्गः षड्दातारमित्यादेः षडिन्द्रियवर्गो येन सः । यद्वा कामाद्यरिषड्वर्गः षड्वर्गः । अज्ञो देही तदभिमानवान् अनिच्छन् इन्द्रियैः कामादिभिर्वा कर्माणि कार्याणि कार्यते । तथाभूतत्वादज्ञानमेतस्येत्यत्र दृष्टान्तमाचष्टे— कोशकार इति । कोशकारः कृमिरिव यथाकर्मणा स्वव्याप्येन कोशेन स्वकर्तृकसर्जनकर्मीभूतनेति वा, आत्मानमाच्छाद्य मुह्यति कोश एव निलीनः स्वनाशानाशौ न जानाति तथाऽज्ञ इत्यर्थः । इति स

जननमरणे न देहिनः किन्तु देहस्यैव, अभिमानादेव जातो मृत इति व्यवहार औपचारिक इतीरयन्ती· तीरयति —लब्ध्वेति । अनिमित्तं उपादानकरणं अव्यक्तं प्रकृतिं तत्सम्बद्धशरीरमिति वा, अव्यक्तं दुर्ज्ञेयं दैवं वा, निमित्तं लब्ध्वा, उत तदनन्तरं व्यक्ताव्यक्तं स्थूलास्थूलकलेवरं भवति, जीवस्येति शेषः । यद्यप्यव्यक्तसंबन्धानन्तरं व्यक्तसंबन्ध इति तदेव पूर्वं निरूप्यं तथाऽपि व्यक्तेनानुमेयं तदिति पूर्वमुक्तिः । व्यक्ताव्यक्तं जन्ममरणं भवतीति वा । देहस्य सर्वथा नाशादनाशाच्चेतनस्य च । अजो नित्यः इत्यादेः (च) । यथायोनि स्वजातिमनतिहाय, यथाबीजं कर्मादिकारणानुसारेण । यथायोनि मातृसमं; यथाबीजं पितृसदृशम् । योनिर्भगवान् । यथायोनि तदिच्छानुसारेण इति यावत् । योनिश्च हि गीयते । यथाबीजं भगवदिच्छानुसारमिति । व्यञ्जनाद् बीजमुच्यते इति, बीजं तदहमर्जुन इत्यादेः (च) । किन्निमित्तीकृत्य भगवता जीवः कार्यत इत्यत उक्तं —स्वभावेन योग्यतया इति । स्वभावाख्या योग्यताया हठाख्येत्यादेः । स्वभावस्यानपायाद् बलीयसेत्युक्तिः ।—इति स

एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः ।
आसीत् स एव न चिरादीशसङ्गाद् विलीयते ॥ ५५ ॥

अयं च श्रुतसम्पन्नः शीलवृत्तगुणालयः ।
धृतव्रतो मृदुर्दान्तः सत्यवाक् मन्त्रविच्छुचिः ॥ ५६ ॥

गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहंकृतिः ।
सर्वभूतसुहृत् साधुर्मितवागनसूयकः ॥ ५७ ॥

एकदाऽसौ वनं यातः पितृसन्देशकृद् द्विजः ।
आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ ५८ ॥

ददर्श कामिनं कञ्चिच्छूद्रं सह भुजिष्यया ।
पीत्वा तु मधु मैरेयं मदाघूर्णितनेत्रया ॥ ५९ ॥

मत्तया विश्लथन्नीव्या ह्यपेतं निरपत्रपम् ।
क्रीडन्तमनुगायन्तं हसन्तमनयाऽन्तिके ॥ ६० ॥

दृष्ट्वा तां कामलिप्तेन बाहुना परिरम्भिताम् ।
जगाम हृच्छयवशं सहसैव विमोहितः ॥ ६१ ॥

---

एवं संसारप्रसङ्गमुक्त्वा तन्निवृत्त्युपायमाहुरित्याह—एष इति । य एषः पुरुषस्य विपर्ययः संसारः प्रकृतिसङ्गेनासीत् स एष ईश्वरसङ्गादीश्वरसेवालक्षणान्नचिरात् क्षिप्रं विलीयते समूलं[1] विच्छिद्यते ॥ ५५ ॥

विद्वत्तादिगुणसम्पन्नत्वेन बुद्धिपूर्वकमेव पापकारित्वेन प्रायश्चित्तानधिकारित्वेन नाममात्रोच्चारणस्य प्रायश्चित्तत्वे सर्वेषामपि मुक्तिप्रसङ्गेन दण्ड्यजनाभावेन युष्मत्स्वाम्याज्ञाकारिणो यमस्याज्ञोल्लङ्घनदोष-प्रसक्त्याऽधिकारहानिलक्षणानर्थः स्यादित्यतो यमसकाशं गत्वाऽयं तत्र दण्डेन शुद्धो भवत्वित्याहुरित्याह—अयं चेति । मन्त्रविद् वेदज्ञः ॥ ५६ ॥ आवृत्तो निवृत्तः ॥ ५८ ॥

भुजिष्यया दास्या मैरेयाख्यं मधुविशेषम् ॥ ५९ ॥

विश्लथन्ती नीवी वस्त्रग्रन्थिर्यस्याः सा तथा ॥ ६० ॥

स्वेदकम्पादिलक्षणजनकेन कामेन लिप्तेन वशीकृतेन । हृच्छयः कामः । तस्य वशम् ॥ ६१ ॥

---

[1] समूलन्तूलं—छ

स्तम्भयन्नात्मनाऽऽत्मानं यावत्सत्त्वं यथाश्रुतम् ।
न शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥

तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः ।
तामेव मनसा ध्यायन् स्वधर्माद् विरराम ह ॥ ६३ ॥

तामेव तोषयामास पैत्रेणार्थेन यावता ।
ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ॥ ६४ ॥

विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम् ।
विससर्जाचिरात् पापः स्वैरिण्यापाङ्गविद्धधीः[1] ॥ ६५ ॥

इतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम् ।
बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम् ॥ ६६ ॥

यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यर्यगर्हितः ।
आवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥

---

यावत्सत्त्वं यथाशक्ति । यथाश्रुतं 'शूद्रयां योनौ पतेद् रेतः' इत्यादि शास्त्रश्रवणमनुसृत्य । मदनवेपितं कामकम्पितं कामबीजावपनस्य क्षेत्रीभूतं वा ॥ ६२ ॥

स्मर इति व्याजग्रहेण ग्रस्तः[2] । विचेतनः शास्त्रविरुद्धज्ञानः ॥ ६३ ॥

ग्राम्यैः कामभोगसाधनैः । काम्यन्त इति कामाः विषयास्तैः ॥ ६४ ॥

[3]अप्रौढामनवाप्तयौवनाम् ॥ ६५ ॥

स्वैरचारी निरंकुशत्वेन वर्तमानोऽघायुः पापजीवनः । [4]मलाद् रागादिदोषात् ॥ ६७ ॥

---

[1] स्वैरिण्या कम्र्या अपाङ्गेन विद्धधीरिति वा, स्वैरिण्याः आ अपाङ्गेनेति स्थिते समासो वेति स. योजना ।

[2] तन्निमित्तो भुजिष्यादर्शननिमित्तः स्मरव्याजः स्मरापदेशः ग्रहस्तेन ग्रस्त इति—स.

[3] अप्रौढामनवाप्तत्रिंशत्संवत्सरां, षोडशशरदमारभ्य त्रिंशत्संवत्सरपर्यन्तं तरुणीति, तरुणीम् । बाला स्यात् षोडशाब्दात् तदुपरि तरुणी त्रिंशतं यावदूर्ध्वं प्रौढा स्यात् पञ्चपञ्चाशदित्यादेः । इति स.

[4] मलमेतदीयमन्नादिकमत्तीति मलात् । स्नानदानादिरहित एवान्नमत्तीति वा । अस्नात्वाशी मलं भुङ्क्ते इत्युक्तेः । इति चेट्टी

तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम् ।
नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुध्यति ॥ ६८ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

॥ अथ द्वितीयोऽध्यायः ॥

बादरायणिरुवाच —

एतत् ते भगवद्दूता यमदूताभिभाषितम् ।
उपधार्याथ तान् राजन् प्रत्याहुर्नयकोविदाः ॥ १ ॥

विष्णुदूता ऊचुः —

अहो कष्टं धर्मदृशामधर्मः स्पृशते सताम् ।
यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ २ ॥

प्रजानां पितरो ये च शास्तारः साधवः समाः ।
यदि स्यात् तेषु वैषम्यं कं यान्ति शरणं प्रजाः ॥ ३ ॥

यद् यदाचरति श्रेयानितरस्तत् तदीहते ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ४ ॥

यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ।
स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥ ५ ॥

---

अकृतनिर्वेशं यावता निर्वेशेन पापशुद्धिः स्यात् तावत्पापप्रायश्चित्तं न कृतवांस्तम् । यत्र नीतो यमभटकृतदण्डेन शुद्धो भवति ॥ ६८ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे प्रथमोऽध्यायः ।

॥ अथ द्वितीयोऽध्यायः ॥

श्रीहरिनामसङ्कीर्तनमाहात्म्यमस्मिन्नध्याये वक्ति । तदर्थं श्रीविष्णुदूता यमदूतान् प्रत्युपोद्घातं रचयन्तीत्याह—बादरायणिरिति । नयकोविदाः प्रायश्चित्तशास्त्रोक्तन्यायसूक्ष्मपण्डिताः ॥ १ ॥

यद् वाक्यं प्रमाणत्वेन करोति तद्वाक्यमनुसृत्य वर्तते । लोको जनः ॥ ४ ॥

स्वयं परबोधमन्तरेण । पशुः पूर्वापरादिदिगनभिज्ञः ॥ ५ ॥

स कथं ह्यर्पितात्मानं कृतमैत्रमचेतनम् ।
विस्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥
अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥
एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायण इति जगाद चतुरक्षरम् ॥ ८ ॥
स्तेनः सुरापो मित्रध्रुक् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ ९ ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥
न निष्कृतैरुदितैर्ब्रह्मवादिभि-
स्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै-
स्तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥

---

स प्रमाणभूतः पुरुषः । आत्मन्यर्पित आत्मा सर्वस्वलक्षणो येन स तथा तम् । अचेतनमज्ञानिनम् । विस्रम्भणीयो विश्वसनीयः । घृण द्रवीभाव इति धातोः परक्लेशदर्शने यस्य चित्तं द्रवीभवति स सघृणः ॥ ६ ॥

अकृतनिर्वेशमित्यत्राहुरित्याह—अयमिति । यमदूतान् दृष्ट्वा पुत्रे सङ्केतितमपि नारायणनाम स्मृत्वाऽस्य नाम्नो हरिरेव मुख्यार्थ इति प्राचीनपुण्यप्रचयाज्झटिति ज्ञानोदयादुत्पन्नभक्त्या विवश इतीममर्थं हिशब्दो वक्ति ॥ ७ ॥

विश्वासजननार्थं पुनरुक्तार्थं द्रढयति[1]—एतेनेति ॥ ८ ॥

न केवलं दासीसङ्गप्राप्तपापहरं हरिनामकीर्तनं, स्तैन्यादिप्राप्तसर्वपापक्षयकरमित्याहुरित्याह—स्तेन इति ॥ ९ ॥ यतस्तद्विषयेत्यनेन भक्तिपूर्वकत्वमाह ॥ १० ॥

ब्रह्मवादिभिर्वेदवादिभिः तन्नाम्न उदाहरणम् उत्तमश्लोकस्य हरेः गुणानानन्दादीन् उपलम्भयति तत्प्रतिबिम्बभूतान् प्रापयतीति तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥

---

[1] घटयति—ङ

नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ।
तत् कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्वभावनः ॥ १२ ॥

अथैनं माऽपनयत कृताशेषाघनिष्कृतम् ।
यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १३ ॥

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥

---

हरेर्नामसङ्कीर्तनेनैव पापनिर्मूलनं, न तपआदिभिरित्येतदुपपादयति—नेति । निष्कृते पापप्रायश्चित्ते कृतेऽपि अघवतः मनः पुनरसत्पथे शास्त्रनिषिद्धमार्गे धावति चेत् तत्प्रायश्चित्तमेकान्तिकं नियतम् अव्यभिचारि न भवतीति यस्मात् तस्मात् कर्मनिर्हारमाकाङ्क्षमाणानां हरेर्गुणानामनुवादः ऐकान्तिक एवेत्यन्वयः । नन्वनेनापि मनोदोषानाशे पूर्वस्मादविशेषः स्यादिति तत्राह—खल्विति । सत्वभावनोऽन्तःकरणशुद्धिहेतुः खलु ॥ १२ ॥

अथ तस्मात् ॥ १३ ॥

नन्वनेन न हरेर्नामाग्राहि किन्तु पुत्रानामैवेति तत्राह—साङ्केत्यमिति । पुत्रादिसङ्केतादिविषयत्वेन नारायणेत्यादिभगवन्नामसङ्कीर्तनमशेषाघहरम् । तदुक्तमाचार्यैः – 'नारायणोऽयमित्यन्यहेलनविषयत्वेनोक्तमघहरम्[1]' इति । भक्तिपूर्वकमेवोदाहृतं हरिनामाशेषाघहरमिति तात्पर्यमत्र बोद्धव्यम् । एतदप्युक्तम् – 'सर्वथाऽघहरं विष्णोर्नाम तद्भक्तिपूर्वकम् । अभक्तयोदाहृतं नैव फलदातृ भविष्यति ॥' नामस्वामितया तस्य स्मरणं जायते यतः । भक्तस्यातो नामकीर्तिः सङ्केतादावपीडिता । अजामिलोऽपि स्मरणाद् भक्त्या मृत्योरमुच्यत' इति । स्मरणप्राचुर्यदर्शनाय साङ्केत्यादिस्थलबाहुल्यकथनम् । सङ्केते रूढिमात्रेण व्यवहारनिर्वाहात् स्मरणासम्भवेन परिहासे तस्मात्[2] स्मरणं सम्भवति । चित्तविकासोद्रेकव्यवहारात् । ततोऽपि[2] स्तोभे स्मरणम् । कोपजननाय नर्मवचनं स्तोभः[3] । मधुमक्षिकासूदनाऽसमर्थस्त्वं किं मधुं सूदितवात् ? असौ हरिश्चेन्मधोर्वधान्मधुसूदन इत्युपपन्नमिति । [2]ततोऽपि हेलने नामस्वामिस्मरणम् । हरेरन्यं नारायणादिनाम्ना पित्रादिभिर्दत्तेनोपचरितं कञ्चन पुरुषं दृष्ट्वा निन्दयेत्

---

[1] नारायणोऽयमित्यन्यविषयत्वेनोक्तमघहरमिति स्वरसः पाठः । नारायणोऽयमित्यन्यविषयत्वेनोक्तं साङ्केत्यं पारिहास्यं स्तोभं हेलनमेव वाऽशेषाघहरमित्येकान्वय इति—गोविन्दाचार्याः

[2] अत्र टीकायां तस्मात्, ततोऽपीत्यतः परमधिकतरमिति पूरणीयम् ।

[3] स्तोभो गीतपूरकपदप्रक्षेपः प्रशंसावचनं वेत्यपि व्याचक्षते—स.

पतितस्खलितो भग्नः सन्दष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान् नार्हति यातनाम् ॥ १५ ॥

गुरूणां च लघूनां च गुरूणि च लघूनि च ।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥ १६ ॥

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १७ ॥

धर्मो योऽयमुपन्यस्तः परमस्तु सनातनः ।
क्रियतेऽहरहः शुद्धिरात्मनो वाससो यथा ॥ १८ ॥

---

'साक्षात्पयोधिशायी नारायणः किल' इति । हरिद्वेषेण हरिनामकीर्तनमघहरं न स्यात् । 'अभक्त्योदाहृतं नैव फलदातृ भविष्यति' इत्यादेश्च । नामस्वामिस्मरणाभावे देवदत्ते नाम पीडितार्थे भवति । मधोः सूदनान्मधुसूदन इत्यर्थस्याभावात्, हरौ तद्भावात् । अतो अजामिलेन भक्त्या नामस्वामिनं स्मृत्वा नामकीर्तनं कृतमिति ज्ञातव्यम् । तदुक्तञ्च 'नामस्वामितया तस्य स्मरणं जायते यतः' इत्यादि । यानि यानि श्रीहरेर्नामानि तानि सर्वाणि पापहरणे सामर्थ्योपेतानि[1] भवन्तीति ज्ञापनाय वैकुण्ठनामेति । अत्रैव 'हरिरित्यवशेनाह यः पुमान्' इति वक्ष्यति । स्मरणं च ज्ञानपूर्वकमपेक्षितमित्यतो विदुरिति[2] ॥ १४ ॥

सन्दष्टः सर्पादिना । आहतो लकुटेन । यातनां दुःखम् ॥ १५ ॥

ननु नामसङ्कीर्तनेन पापपरिहारे गुरुलघुपापपरिहारार्थं गुरुलघुप्रायश्चित्तविधानं व्यर्थमित्याशङ्क्य प्रायश्चित्तेन तत्तत्पापपरिहारेऽपि संसारहेतुभूतं पापसंस्कारव्यञ्जकं प्राकृतं लिङ्गं मनो भगवदनुग्रहेण लीयते नाम्नेनेत्याह—**गुरूणामिति**[3] ॥ १६ ॥

हृदयं लिङ्गं मनः ॥ १७ ॥

अजामिलस्यापि सकृन्नामसङ्कीर्तनेन वृषलीसङ्गावाप्तपापपरिहारेण देहवियोगलक्षणमृत्योर्मुक्तिः न तु संसारात्, तदर्थं तन्नामोच्चारणादिसेवाऽहरहः कर्तव्येति विधीयते—**धर्म इति** । धर्मो

---

[1] एतदनन्तरं रविग्रहवदिति अधिकः पाठः—क

[2] अस्पष्टमिदं वाक्यम् । विदुरित्यनेन बहुसंवादं ध्वनयामासुरिति ज्ञेयम्—स

[3] गुरूणामित्यादिश्लोकद्वयेनेति यावत् ।

नैकान्तशुद्धिः स्यात् कर्तुः क्रियया ऽकर्तृता यतः ।
अकर्तुरात्मनस्तस्माद् भजेतानीहया हरिम् ॥ १९ ॥

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्तितमघं पुंसो दहत्येधो यथाऽनलः ॥ २० ॥

यथाऽगदं वीर्यवुतं सूपयुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः । ॥ २१ ॥

---

नामसङ्कीर्तनलक्षणः । आत्मनः शुद्धिः अचिन्मनोनाशेन चिन्मनसः कैवल्यलक्षणा शुद्धिर्भवति[1] । वाससो निर्णेजनेनेवेति शेषः ॥ १८ ॥

नन्वीश्वरसेवया यथा मनश्शुद्धिः तथा निरन्तरप्रायश्चित्तक्रियया ऽपि सा किं न स्यादिति तत्राह —**नैकान्तशुद्धिरिति** । अकर्तुः स्वतन्त्रकर्तृतारहितस्यात्मनः जीवस्य प्रायश्चित्तकर्मकर्तुः प्रायश्चित्त-क्रियया एकान्तशुद्धिर्मनःशुद्धिपूर्विका शुद्धिर्न स्यात् । अकर्तृता स्वतन्त्रकर्तृत्वं नास्तीति यतः । तस्मादनीहया निषिद्धकर्माकरणेन निरन्तरहरिनामकीर्तनलक्षणक्रियया हरिं भजेतेत्यन्वयः ॥ १९ ॥

नामसङ्कीर्तनस्य कर्तव्यतामर्थवादरूपेणोपसंहरति—**अज्ञानादिति** । अज्ञानादित्यनेन सर्वात्मना ज्ञानाभावोऽपि[2] न विवक्ष्यते । किन्तु अरविरुद्धत्वान्नाराः गुणाः तेषामाश्रयो नारायण इत्याद्यर्थविषय-वेदनाभावः । अन्यथा हरेः सर्वशब्दवाच्यत्वेन घटपटादीनां तन्नामत्वेऽपि तान् विहाय नारायणादि-नामकीर्तनानुपपत्तेः । अत उपचारमात्रमिदमिति ज्ञातव्यम् ॥ २० ॥

सर्वशब्दानां भगवन्नामत्वेऽपि तदावृत्त्याऽपि फलानुदयात् नारायणादिनाम्ना तदुदयोपलम्भादुभ-येषां विशेषः कस्मादित्याशङ्क्य मन्त्रोऽगदवदित्याहुरित्याह—**यथेति** । अजानत इत्यत्रापि उपदेशादिना सामान्यज्ञानमस्त्येव । सूपयुक्तमित्यस्योपदेशापेक्षितत्वात्[3] । यथेतरस्तम्बमूलशब्दमात्रेभ्यः मन्त्रौषधयोः विशिष्टफलत्वं चेश्वरक्लृप्तदेवतासन्निधानात् तथाऽत्रापीति भावः ॥ २१ ॥

---

[1] अहरहः सदा क्रियते चेदात्मनो मनसः शुद्धिः, भवतीति शेषः । यथा वसनस्य शुद्धिः, नीरक्षारादिनेति शेषः—इति स.

[2] अपीतिपदमधिकमिति भाति ।

[3] सूपयोगस्योपदेशसापेक्षत्वादित्यर्थः ।

पतिं वः पृच्छत भटा धर्मेऽस्मिन् यदि संशयः ।
स वेद परमं गुह्यं धर्मस्य भगवान् यमः ॥ २२ ॥

श्रीशुक उवाच —

एवं ते सुविनिर्णीय धर्मं भागवतं नृप ।
तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥ २३ ॥

इति प्रत्युदिता याम्या दूता याता यमान्तिकम् ।
यमराज्ञे यथा सर्वमाचचख्युररिन्दम ॥ २४ ॥

द्विजः पाशाद् विनिर्मुक्तो गतभीः प्रकृतिं गतः ।
ववन्दे शिरसा विष्णोः किङ्करान् दर्शनोत्सुकः[1] ॥ २५ ॥

तं विवक्षुमभिप्रेत्य महापुरुषकिङ्कराः ।
सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ ॥ २६ ॥

अथाजामिल आकर्ण्य दूतानां यमकृष्णयोः ।
धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम् ॥ २७ ॥

---

भवद्भिरस्मदुक्तार्थो विस्रम्भणीयः, युष्मत्पृष्टस्वाम्युक्तार्थस्यैकत्वोपपत्तेरित्याशयेनाहुरित्याह—**पतिं व इति** ॥ २२ ॥

मृत्योर्देहवियोगलक्षणात् ॥ २३ ॥

विष्णुदूतैः सदुत्तरीकृता याम्याः पुनः किमकुर्वन्निति तत्राह – **इतीति** ॥ २४ ॥

अजामिलेन मुक्तमृत्युना पुनः किंकारीति तत्राह – **द्विज इति** । प्रकृतिं गतः सात्विकावस्थां प्राप्तः ॥ २५ ॥

मर्त्यदेहस्थेन तेन द्विजेन सल्लापायोगाद् विष्णुदूतैः किं कृतम् ? अत्राह—**तं विवक्षुमिति** । ॥ २६ ॥

प्रकृतिं गत इत्युक्तं विवृणोति—**अथेति** । त्रैविद्यं त्रिवेदविहितं धर्मम् । एतदेव स्पष्टयति—**गुणाश्रयमिति** ॥ २७ ॥

---

[1] दर्शनोत्सवः—स. । दर्शनोत्सुकान्, स्वदर्शनेन जनानामुत्सवापादकान्—चेट्टी

[2] तयोः दूतानां सकाशात् त्रैविद्यं वेदत्रयविहितं गुणाश्रयं शुद्धं भागवतं धर्ममाकर्ण्येति सामानाधिकरण्येनान्वयः । त्रैविद्यं सत्वादिगुणाश्रयकं धर्मं यमदूतोदितं शुद्धं भागवतं धर्मं (च) हरिकिङ्करोदितमिति वैयधिकरण्येन यथाक्रममन्वयो वा—स.

भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः ।
अनुतापो महानासीत् स्मरतोऽशुभमात्मनः ॥ २८ ॥

अहो मे परमं कष्टमभूदविजितात्मनः ।
येन विप्लावितं ब्रह्म वृषल्यां जायताऽऽत्मना ॥ २९ ॥

धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ।
हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥ ३० ॥

न्धू वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ ।
अहो मयाऽधुना त्यक्तावकृतज्ञेन नीचवत् ॥ ३१ ॥

सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ।
धर्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः ॥ ३२ ॥

किमिदं स्वप्नमाहोस्वित् साक्षाद् दृष्टमिहाद्भुतम् ।
क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥ ३३ ॥

अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ।
व्यमोचयन् नीयमानं बद्ध्वा पाशैरधोभुवः ॥ ३४ ॥

अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ।
भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥ ३५ ॥

---

स्वर्गादिविषयं श्रुत्वा पथिकवदुदासीनोऽभूत् किम्? अत्राह—**भक्तिमानिति** । अभूदिति शेषः । कृतदोषप्रायश्चित्ताभावे हरौ भक्तिः सुदृढा न स्यादित्यतः तत्प्रायश्चित्तक्रियाप्रकारमाह—**अनुताप इति** ॥ २८ ॥

ब्रह्म ब्राह्मण्यं विप्लावितं विनाशितम् । जायता रेतोरूपेण जायमानेन ॥ २९ ॥

कुलकज्जलं ब्राह्मणकुलमषीभूतम् ॥ ३० ॥ भुवोऽधः नरकम् ॥ ३४ ॥

यत्किञ्चित् पुण्यमस्ति चेद् विष्णुदूतसन्दर्शनसाधनं तत् स्यादिति प्रार्थयते—**अथापीति** । येन पुण्येन । आत्मा मनः[1] ॥ ३५ ॥

---

[1] येन कारणेनात्मा मनः प्रसीदति प्रसन्नं वर्तते तेन विबुधोत्तमदर्शने मङ्गलसाधने जाते मङ्गलायतनभटावलोकादिप्रापकेन भवितव्यम् । तदवलोको मनःप्रसादश्च भाविभाग्युकघटकावित्यूहितवान्' इति स. 'यद्यप्यहमस्मिन् जन्मनि दुर्भगः पापीयान् । तथापि जन्मान्तरे नूनं पुण्यवानित्याह—अथापीति ।

अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ ३६ ॥

क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद् भगवन्नाम मङ्गलम् ॥ ३७ ॥

सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः ।
यथा न भूय आत्मानमन्धे तमसि मज्जये ॥ ३८ ॥

विमुच्य तमिमं बन्धमविद्याकामकर्मजम् ।
सर्वभूतसुहृद् दान्तो मैत्रः करुण आत्मवान् ॥ ३९ ॥

मोचये ग्रस्तमात्मानं योषिन्मय्याऽऽत्ममायया ।
विक्रीडितो यथैवाहं क्रीडामृग इवाधमः ॥ ४० ॥

ममाहमिति देहादौ हित्वा मिथ्यार्थधीर्मतिम् ।
धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ॥ ४१ ॥

इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु ।
गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ॥ ४२ ॥

---

अन्यथा पूर्वचीर्णपुण्याभावे[1] ॥ ३६ ॥

ब्रह्मोज्झः त्यक्तब्राह्मण्यः ॥ ३७ ॥

आत्ममायया हरेरधीनया लोकमोहनशक्त्या । यथा यथावत्[2] ॥ ४० ॥

गङ्गाद्वारं नाम तीर्थविशेषम् ॥ ४२ ॥

---

विबुधोत्तमदर्शन इति निमित्तसप्तमी । तेषां दर्शनाय पूर्वेण मङ्गलेन महापुण्येन भवितव्यम् । येन दर्शनेनात्मा मनः प्रसीदति निर्मलं भवति । आत्मा परमात्मेति वा '—इति चेट्टी

[1] वैकुण्ठनाम ग्रहणमिति पदद्वयमङ्गीकृत्य, ग्रहणं साध्यत्वेनास्यास्तीति भगवज्ज्ञानसाधनमिति अर्शआद्यजन्तत्व-मंगीकृत्य सत्याभिनवतीर्था एवं व्याचकुः—अन्यथा मङ्गलस्य भवितव्यत्वाभावे म्रियमाणस्याशुचे-रशुद्धस्य वृषलीपतेः दासीपतेर्मम इह अस्मिन् देहे विद्यमाना जिह्वा ग्रहणं भगवज्ज्ञानसाधनं वैकुण्ठनाम वक्तुं नार्हतीति ।

[2] यथा क्रीडामृग इति, अधमः श्रुतसम्पन्नत्वादिरहितपुरुष इव चेति दृष्टान्तद्वयमिति—स.

स तस्मिन् देवसदन[1] आसीनो योगमास्थितः ।
प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ ४३ ॥

ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना ।
युयोज भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि ॥ ४४ ॥

यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत् पुरुषान् पुरः ।
उपलभ्योपलब्धान् प्राग् ववन्दे शिरसा द्विजः ॥ ४५ ॥

हित्वा कलेवरं तीर्थे गङ्गायां[3] दर्शनादनु ।
सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ॥ ४६ ॥

साकं विहायसा विप्रो महापुरुषकिङ्करैः ।
हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ ४७ ॥

एवं स विप्लावितसर्वधर्मो दास्याः पतिः पतितो गर्ह्यकर्मा ।
निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ४८ ॥

नातः परं कर्मनिबन्धकृन्तनं
मुमुक्षतां तीर्थपदानुकीर्तनात् ।

---

प्रत्याहृतो वशीकृत इन्द्रियग्रामो येन स तथा तम् । आत्मनि हरौ ॥ ४३ ॥

गुणेभ्यः शरीरेन्द्रियादिभ्यः । आत्मानं स्वस्वरूपम् । भगवद्धाम्नि भगवत्स्वरूपे । ब्रह्मणि व्याप्ते । [2]अनुभवात्मनि ज्ञानात्मनि ॥ ४४ ॥

यर्हि यस्मिन् काले उपारतधीः बाह्यविषयान्निवृत्त्य हरावेव निरतबुद्धिरभूत् । तस्मिन् काले । पुरः स्वस्याग्रभूमौ । प्रागुपलब्धान् दृष्टान् ॥ ४५ ॥

[4]भगवत्पार्श्ववर्तिनां मुक्तानाम् । स्वरूपं निर्दोषत्वादिलक्षणम् ॥ ४६ ॥

नामसङ्कीर्तने श्रद्धातिशयं जनयन्नुपसंहरति—एवमिति । दास्याः पतिरित्याक्रोशे षष्ठी । अजमिलनाम मुक्त्वा दास्याः पतिरित्याह्वयति लोक इत्यर्थः ॥ ४८ ॥

---

1 'गङ्गाद्वारे देवसदने त्रिविक्रमाख्यदेवालये । गङ्गाद्वारे त्रिविक्रममिति स्कान्दोक्तेः'—इति चेट्टी

2 अनुभवं प्रति जन्म आत्मनि स्वामिनीति—स.

3 भगवत्पार्षददर्शनानन्तरम् ।

4 भगवत्पार्श्ववर्तिनां दृष्टदूतानां स्वरूपमिव स्वरूपं जगृहे इत्यन्वयः । मुक्तानां स्वरूपमित्यर्थो वा—स.

न यत् पुनः कर्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं न चान्यथा ॥ ४९ ॥

य एवं परमं गुह्यमितिहासमघापहम् ।
श्रुणुयाच्छ्रद्धया युक्तो यश्च भक्त्याऽनुकीर्तयेत् ॥ ५० ॥

न वै स नरकं गच्छेन्नेक्षितो यमकिङ्करैः ।
यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते ॥ ५१ ॥

म्रियमाणो हरेर्नाम गृणन्[1] पुत्रोपचारितम् ।
अजामिलोऽप्यगान्मुक्तिं[2] किमुत श्रद्धया गृणन् ॥ ५२ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे द्वितीयोऽध्यायः ।

---

अन्यथा तीर्थपदानुकीर्तनं विना ॥ ४९ ॥

अमङ्गलो यद्यपि तथापि ॥ ५१ ॥

दासीसङ्गादवाप्तपापमुक्तिकरी अन्ते नारायणस्मृतिरिति जानन्नजामिलोऽपि नित्यकर्मतयोपलब्धया नित्याभ्यासेन मरणसमयेऽपि नामस्मरणार्थं पुत्रोपचरितं कृत्वा श्रद्धया पुत्राह्वानव्याजेन कीर्तयन् मुक्तिमगात् । न तु पुत्रस्नेहेन । 'भगवति श्रद्धया ।' 'भक्तियोगो भगवति तन्नामग्रहणादिभिः' इत्युत्तरत्र वक्ष्यमाणत्वात् । पुत्रादिसाङ्केतिकं नाम मुक्त्वा नित्यकर्मत्वेन श्रीहरिनाम कीर्तयन् किमुत श्रद्धयेत्युच्यते । अस्य फलाधिक्यं च दर्शयितुं पृथगेवोक्तिरिति ज्ञातव्यम्[3] ॥ ५२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धस्य द्वितीयोऽध्यायः ॥ २ ॥

---

[1] गृह्णन्—स [2] अगाद् धाम—स

[3] पुत्रे स्वतनये उपचरितं, निर्वचनलभ्यार्थविकला भवत्युपचरितमिति, नाम श्रद्धया गृह्णन् अजामिलोऽपि, दुराचार्योऽपीति फलितोऽर्थः, धाम वैकुण्ठमगात् । श्रद्धया बहिर्दृश्यमानासद्वृत्तिरहितया श्रद्धया गृणन् धाम गच्छेदिति किमुतेति कैमुत्यो न त्वभक्त्यापीति ज्ञेयः—इति स.

॥ अथ तृतीयोऽध्यायः ॥

**राजोवाच —**

**निशम्य देवः स्वभटोपवर्णितं**
**प्रत्याह किं तानपि धर्मराजः ।**
**एवं हताज्ञो विहतान् मुरारे-**
**र्नैदेशिकैर्यस्य वशे जनोऽयम् ॥ १ ॥**

**यमस्य देवस्य न दण्डभङ्गः**
**कुतश्चनर्षे श्रुतपूर्व आसीत् ।**
**एवं मुने वृश्चति लोकसंशयं**
**न हि त्वदन्य इति मे विनिश्चितम् ॥ २ ॥**

**बादरायणिरुवाच —**

**भगवत्पुरुषै राजन् याम्याः प्रतिहतोद्यमाः ।**
**पतिं विज्ञापयामासुः यमं संयमनीपतिम् ॥ ३ ॥**

**यमदूता ऊचुः —**

**कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो ।**
**[1]त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥ ४ ॥**

---

॥ अथ तृतीयोऽध्यायः ॥

भक्तिपूर्वकं नामसङ्कीर्तनं मुक्तिसाधनमित्येतस्मिन्नध्यायेऽभिधीयते । तत्र राजा पृच्छति— **निशम्येति** । हता आज्ञा यस्य स हताज्ञः । मुरारेर्नैदेशिकैः आज्ञाकारिभिः किङ्करैरित्यर्थः । विहतान् प्रतिहतान् स्वामिनिर्देशकरणाशक्त्या पीडितानित्यर्थः । अयं जनो यस्य यमस्य वशो वर्तते ॥ १ ॥

दण्डभङ्गः आज्ञाभङ्गः । वृश्चति छिनत्ति ॥ २ ॥

'वाचंयमे प्रेतपतौ यमने च यमः स्मृतः' इत्यभिधानात् संशयनिराकारणाय संयमनीपतिमिति ॥ ३ ॥

फलाभिव्यक्तिहेतवः फलदातारः । कति सन्तीत्यस्यायमर्थः । किमेकः शास्ता अथवा बहवः ?

---

[1] त्रैविद्यमिति पाठं चांगीकृत्य वेदत्रयविहितमिति व्याचक्रुः—स.

यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः ।
कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव च ॥ ५ ॥

किन्तु शास्तृबहुत्वे स्याद् बहूनामिह कर्मिणाम् ।
शास्तृत्वमुपचारो हि यथा मण्डलवर्तिनाम् ॥ ६ ॥

अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः ।
शास्ता दण्डधरो नृणां शुभाशुभविवेचनः ॥ ७ ॥

तस्य ते विहतो दण्डो नृलोके वर्ततेऽधुना ।
चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता ॥ ८ ॥

नीयमानं तवादेशादस्माभिर्यातनागृहम् ।
व्य व्यामोचयन् पातकिनं छित्वा पाशान् प्रसह्य ते ॥ ९ ॥

---

तत्रापि इयन्त इति नियमोऽस्ति, किं वा नेति[1] ॥ ४ ॥

द्वितीयं प्रत्याहुरित्याह—यदि स्युरिति । इयन्त इति संख्याताः बहवः मृत्यमृतयोः दानसमर्था उत न ? न द्वितीय इत्याहुरित्याह—कस्येति । मृत्युलक्षणो बन्धः अमृतलक्षणो मोक्षश्च कस्य स्यातामिति वक्तव्यम् । न कस्यापि स्याताम् । दातृत्वे सामर्थ्याभावात् । प्रथमं परिहरन्तीत्याह—न वेति । तौ कस्य न स्याताम् ? सर्वेषामपि स्याताम् । सामर्थ्यात्[2] ॥ ५ ॥

न चैतद् युक्तमसम्भवात्, मिथो विरोधापातादित्याहुरित्याह—किन्त्विति । मण्डलवर्तिनां मण्डलेश्वराणाम् ॥ ६ ॥

यत एवं बहुत्वे दोषः, अत एकः शास्ता स चैकस्त्वमेवेति प्रथमपक्षोऽभिमत इत्याहुरित्याह—अत इति । शुभाशुभविवेचनः शुभाशुभविवेककर्ता ॥ ७ ॥

---

[1] हे प्रभो स्वामिन् ! एकवचनेनेह शास्तारः शासकाः कति सन्तीति काकुः । तथा चाक्षेपो ध्वन्यते । तेन न सन्तीत्यान्तरङ्गिको भावोऽपि ध्वनितः । वै इत्यनेन तवैव प्रभावः प्रसिद्ध इति काकुमुज्जीवयन्तीति ज्ञायते । ज्ञायते च (आक्षेपः) यदि स्युरित्युत्तरपद्येनापि—स.

[2] एवमपि व्याख्येयम् । यदि लोके शास्तारो बहवः स्युः तेषामिच्छानां विरोधे परस्परप्रतिबन्धोऽस्ति न वा ? आद्ये मृत्युश्चामृतं च सुखदुःखे, बन्धमोक्षौ वा कस्य स्याताम् ? इच्छयोर्विरोधे परस्परप्रतिबन्धेन कार्यानुत्पत्तिरिति कस्यापि न किमपि स्यादेव । द्वितीये इच्छयोर्विरोधेऽपि प्रतिबन्धाभावे कस्य वा न स्याताम् ? सर्वस्यापि युगपत् सर्वं स्यादेव । न चैतद् युज्यते, विरोधात् । अतः शास्तृबहुत्वं नांगीकार्यमिति । अत्र महान्तः प्रमाणम् ।

तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम् ।
नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम् ॥ १० ॥

श्रीशुक उवाच —

इति देवः स आपृष्टः प्रजासंयमनो यमः ।
प्रीतः स्वदूतान् प्रत्याह स्मरन् पादाम्बुजं हरेः ॥ ११ ॥

यम उवाच —

परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद् यत्र विश्वम् ।
यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद् यस्य वशे च लोकः
॥ १२ ॥

---

यमः स्वदूतान् वक्तीत्याह— इतीति ॥ ११ ॥

यदुक्तं भवद्भिस्त्वमेक एव शास्तेति तदनालोच्य कथितम् । मदन्यस्यात्युत्तमस्य सत्त्वादित्याह —**पर इति** । मदन्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य च शास्ताऽस्ति । स क इत्यत उक्तम् —**पर इति** । 'परोऽरिपरमात्मनोः' इत्यभिधानात् स शास्ता परः परमात्मा । तस्य लक्षणमाह— **ओतमिति** । अयमर्थः । पटवत् यथा कन्थापटः सूत्रे तन्तौ दीर्घतया ओतः तिरश्चीनतया प्रोतः तन्त्वाधारत्वेन स्थितः तथेदं विश्वं यत्र परमात्मनि ओतप्रोतधर्मेण तदाधारत्वेन स्थितम् । 'यस्मिन्निदं सं च विचैषि सर्वं' 'यथा कन्थापटाः सूत्र ओताः प्रोताश्च संस्थिताः । एवं विष्णाविदं विश्वमोतं प्रोतं च संस्थितम्' इत्यादिश्रुतिस्मृतिबलादेतल्लक्षणमव्याप्त्यतिव्याप्त्यादिदोषरहितम् । यदि अस्य आधारको न स्यात् तर्हि पतिष्यति । वेगाख्यसंस्काररहितशरवदित्यादितर्काच्च । लक्षणान्तरं चाह— **यदंशत इति** । यस्यांशतो वासुदेवादिस्वरूपांशैर्भिन्नांशैर्ब्रह्मादिभिरस्य जगतः स्थितिजन्मसंहाराः, भवन्तीति शेषः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्' इत्यादेः व्यासरूपमन्तरेणापि[1] धारकत्वं तस्यैवेति निश्चयाय चशब्देन पुनर्ग्रहणम् । जन्मनाशावेव लक्षणान्तर इति[2] । जातपक्षपक्षिवत् पुनरस्याधीनं न स्यादिति नेत्याह—**नसीति** । नसि नासिकायाम् ओता गाव इति च ॥ १२ ॥

---

[1] व्यासरूपेणापि—च

[2] ओतं प्रोतं पटवत् यत्र विश्वमिति स्थितिकर्तृत्वमेवोक्तम् । सृष्टिकर्तृत्वं नाशकर्तृत्वं च लक्षणान्तर इत्यभिप्रायः स्यात् ।

यो नामभिर्वाचि जनं निजायां बध्नाति तन्त्यामिव दामभिर्गाः ।
यस्मै बलिं त इमे नामकर्मभिर्निबन्धबद्धाश्चकिता वहन्ति ॥ १३ ॥

अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः
आदित्यविश्वेवसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥

अ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥१५॥

यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वाऽसुभृतो विचक्षते ।
आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥

---

हरेः शास्तृत्वं नाम दण्डधरस्य दण्डेनेव न । किन्तु वेदलक्षणया वाचा इत्याह—य इति । य ईशः निजायां स्वसादभिव्यक्तायां वाचि वेदलक्षणायां नामभिर्ब्रह्मादिलक्षणैर्बध्नाति । 'निजमात्मीयनित्ययोः' इत्यभिधानम् । बन्धनेन किं प्रयोजनम्? अत्राह—यस्मा इति । नामकर्मणामानन्त्यप्रकटनाय बहुवचनम् । अन्यथा नामकर्मभ्यामित्यलम् । दृढं बन्धो निर्बन्धः, तेन बद्धाः । ॥ १३ ॥

लोकतः सर्वज्ञानामस्माकं स्वविषयज्ञानजनकत्वमाहात्म्यं च श्रीहरिलक्षणमित्याह— अहमित्यादिना[1] ॥ १४ ॥

न स्पृष्टाः रजस्तमोभ्यामस्पृष्टरजस्तमस्काः शुद्धसात्त्विका इत्यर्थः । ततो भृग्वादिभ्यो अन्ये मन्वादयः । सत्त्वप्रधाना इत्यनेन सत्त्वं प्रचुरम्, अन्ये रजस्तमसी च किञ्चित् स्त इति ज्ञायते । कुत इत्यत उक्तम्—स्पृष्टेति । ईहितमिच्छाविषयमभिप्रायम् ॥ १५ ॥

तत्प्रसादमन्तरेणादृष्टलक्ष्यवेधवच्चक्षुरादीन्द्रियाविषयत्वेन तद्विषयं ज्ञानं दुष्करमित्याह—यं वा इति । गोभिः चक्षुरादीन्द्रियैः । असुभृतो जीवाः । आत्मनां जीवानामात्मानमन्तर्यामिणम् । स्वरूपान्तरं[2] चाह—अन्तर्हृदि सन्तम् । अथवाऽऽत्मनामन्तर्हृदि सन्तम् । आकृतयो रूपाणि । स्वप्रकाशं चक्षुरिन्द्रियम् । अनेन निकटवर्तिनां चक्षुरादीन्द्रियाभिमानिनां देवानामपि तद्विषयज्ञानाभाव

---

[1] यदि स्वामिन् तवेयती संवित्सीमा तर्हि पूर्वमेव वयं त समानेतुं नाज्ञाप्यास्तथा चैवं मानहानिर्हानुभूता स्यादित्यतो न वयं साकल्येन तदभिज्ञा इति स्वोत्तमान् गृण्हानः कैमुत्येनाह—अहमिति । —इति स.

[2] रूपान्तरं—च,ह

तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः ।
प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः ॥ १७ ॥

भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि ।
रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥ १८ ॥

धर्मं तु साक्षाद् भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणादयः ॥ १९ ॥

स्वयम्भूर्नारदः शम्भुः कुमारः [1]कपिलो [2]मुनिः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥

---

उक्त इति ज्ञातव्यम् । स्वरूपत्वेन नाकृतयः पश्यन्तीति चेत् तत्राह—तत इति । ततः आकृतिभ्यः परं विलक्षणं भिन्नमित्यर्थः । इदमपि हरिलक्षणम् । स पर इति पूर्वेणान्वयः[3] ॥ १६ ॥

तांस्तु वेदितुमिच्छाम इत्यस्योत्तरमाह— तस्येति । मायाधिपतेः लक्ष्मीपतेः । आत्मतन्त्रत्वलक्ष्मीपतित्वे पूर्वोक्तलक्षणसाधके इति ज्ञातव्यम् । प्रायेणेति कथितार्थनिर्धारणाय[4] । तस्य हरेः रूपं श्यामवर्णं गुणाः विप्रप्रियत्वादयः स्वभावो नित्यनिर्दोषत्वं येषां ते तथा ॥ १७ ॥

तेषां किं कृत्यमिहेति तत्राह—भूतानीति । विष्णोर्भूतानि पार्षदाः । दुर्दर्शलिङ्गानि दर्शनायोग्यलक्षणानि । तद्भक्तिमतः विष्णुभक्तिमतः ॥ १८ ॥

विष्णुदूताश्चेत् तर्हि पातकिनं किमित्युदमूमुचन्निति तत्राह—धर्मं त्विति । तुशब्दात् सूक्ष्मज्ञानं युष्माकं नास्तीत्याह ॥ १९ ॥ तर्हि के विदुरिति तत्राह—स्वयम्भूरिति ॥ २० ॥

---

[1] कपिलः कश्चन सन्, —इति स. [2] मनुः—स.

[3] यं गोभिरिति सामान्यत इन्द्रियोक्तिः, इन्द्रियैः, नेन्द्रियाणीति श्रुतेः । तद् विविच्योचे । मनसा । यन्मनसा न मनुत इत्यादेः । असुभिः प्राणैः । हृदेति पुनर्वचः पूर्ववत् । गिरा । यद् वाचाऽनभ्युदितं, यतो वाचो निवर्तन्त इत्यादेः । असुभृतोऽसून् बिभ्रतीति ते तथा न विचक्षते न विपश्यन्ति । दूरे वसतो न निरीक्षणं संभावितमित्यत आह—हृदिति । तत्राप्यन्तः कमलकर्णिकायां सन्तमात्मानमन्तर्यामिणम् । ततो गवादेः परं विलक्षणम् । आकृतयो रूपाणि । आकृतिः कथिता रूप इति विश्वः । चक्षुः चक्षुरिन्द्रियं कर्म यथा न विचक्षते । ग्राह्यग्राहकयोः सन्निकर्षेऽपि निष्कर्षोऽयं ग्राहक एवायं तद्ग्राह्य इति चक्षुर्नाकृतिग्राह्य इत्यर्थः । द्रव्यं कर्म चेत्यादेः भगवतोऽनुग्रहाभावे न किञ्चिदप्युदञ्चयितुं समर्था इति द्योतयन्ति इति निदर्शनेनेति ज्ञेयम् —इति स.

[4] प्रायेणेत्यनेन तद्गुणादिप्रतिबिम्बतया सारूप्यं रूपादिकस्य सूचयति । प्रायस्तुल्यबाहुल्ययोरपीति विश्वः । प्रायेण चरन्तीत्यन्वयो वा—इति स.

द्वादशैते विजानीमो धर्मं भागवतं भटाः ।<br>
गुह्यं विशुद्धं दुर्बोधं यज्ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।<br>
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।<br>
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥

[1]एतावताऽलमघनिर्हरणाय पुंसां<br>
सङ्कीर्तनं भगवतो गुणकर्मनाम्नाम् ।<br>
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि<br>
नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥

---

किञ्च धर्मस्वरूपं निवेदयतु भवानित्याशङ्क्य उत्तमं धर्मं वदामीत्यभिप्रायेणाह— एतावानिति । तस्य हरेर्नामग्रहणादिभिः भगवति यो भक्तियोगः एतावान् पर उत्तमो धर्मः स्मृत इत्यन्वयः । 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इति स्मृतियुक्तम्[2] ॥ २२ ॥

नारायणेत्यादिगुणनाम्नां मधुसूदनेत्यादिकर्मनाम्नां, गुणानां कर्मणां नाम्नां वा यत् सङ्कीर्तनम् एतावता पापनिर्हरणायालम् । साधनान्तरं नापेक्षितमित्यन्वयः । विक्रुश्य आहूय ॥ २४ ॥

---

[1] येनैवेत्युक्तं विवृणोति–एतावतेति । भगवतो गुणकर्मनाम्नां नारायणेत्यादिगुणनाम्नां मधुसूधनेत्यादिकर्मनाम्नां च गुणानां कर्मणां नाम्नां वा संकीर्तनं सम्यक् भक्तिपूर्वकं कीर्तनं पुंसामघानिर्हरणाय अलं पर्याप्तम् । अलं भूषण-पर्याप्तिशक्तिवारणवाचकमित्यभिधानात् । ननु नैतावन्मुक्त्यर्थमपेक्षितम् । भक्त्याद्यभावेऽपि पुत्रोपचरितेन नामोच्चारणेनैवाजामिलस्य मुक्तेर्दर्शनादित्यत आह—विक्रुश्येति यद् यस्माद् अघवानजामिलोऽपि म्रियमाणः सन् नारायणेति नाम्ना पुत्रं विक्रुश्यानन्तरमेव एतावता नामस्वामिस्मरणाभिव्यक्तभक्तिपूर्वककीर्तनेनैव मुक्तिमियाय अवाप । तस्मादिति पूर्वेणान्वयः । यद्वा यच्छब्दः प्रश्नार्थः । 'यच्छब्दस्तु परामर्शे प्रश्नार्थेऽपि भण्यते' इत्यभिधानात् । ततोऽजामिलोऽपि पुत्रं विक्रुश्य मुक्तिमियाय यत् अगात् किम् ? नैव । किन्तु एतावता प्रागुक्तभक्तिपूर्वकसंकीर्तनेनैवेत्यर्थः । .... .... न च व्यवधानेनान्वयो दोषः । सन्निधानापेक्षया योग्यताया प्रबलत्वात् । उक्तं च 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' इति । इति चेट्टी.

यत्तु भक्तिरहितकीर्तनमपि कृत्स्नपापक्षयकरमिति अस्य श्लोकस्य व्याख्यानं तदतितुच्छम् । अनादौ संसारे तादृशनामाभासोच्चारणस्य सर्वैरपि कृतत्वावश्यंभावेन सद्य एव मुक्त्यापातात् । भक्त्यादिविधायकबहुप्रमाणव्यापकोपश्चेति—चेट्टी

[2] स्मृतेरित्युक्तम्—ङ, स्मृतावुक्तम्—च यद् भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा इत्युत्तरार्धम् ।

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्बत माययाऽलम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥

एवं विमृश्य सुधियो भगवत्यनन्ते
सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां
स्यात् पातकं तदपि हन्त्युरुगायवादः ॥ २६ ॥

ते देवसिद्धपरिगीतपवित्रगाथा
ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान् नोपसीदत हरेर्गदयाऽभिगुप्तान्
नैषां भयं न च वयं प्रभवाम दण्डे ॥ २७ ॥

तानानयध्वमसतो विमुखान् मुकुन्द-
पादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुले रसज्ञैः
जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ २८ ॥

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।

---

देव्या बहुविधविलासोपेतया । मधुपुष्पितायां स्वर्गादिपुष्पप्रकाशिकायाम् । वैतानिके वेदविहिते, यज्ञसंबन्धिनि वा । युज्यमानः प्रेर्यमाणः ॥ २५ ॥

भावयोगं भक्तियोगम् । उरुगायवादः भगवन्नामकीर्तनम् ॥ २६ ॥

गाथाः सङ्कीर्तनानि [1]'देवादिभिर्नृत्तगीतसङ्कीर्तनाः'[2] । गदया कौमोदक्या ॥ २७ ॥

असतः लोकनिन्दितकर्मनिरतान् । निरयवर्त्मनि नरकद्वारे गृहे भार्यादौ ॥ २८ ॥

---

[1] वेदादिभिः—क छ

[2] देवैः सिद्धैश्च परिगीताः पवित्रगाथाः स्वचर्याविषयाः येषां ते—स.
देवादिभिर्नित्यगीतसङ्कीर्तनाः—य

कृष्णाय नो नमति यच्छिर एकदाऽपि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥

कृष्णाङ्घ्रिपद्ममधुलिट् न पुनर्विसृष्ट-
मायागुणेषु रमते वृजिनावहेषु ।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टु-
मीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३० ॥

तत् क्षम्यतां स भगवान् पुरुषः पुराणो
नारायणः स्वपुरुषैर्यदसत्कृतं नः ।
स्वानामहो नविदुषां रचिताञ्जलीनां
क्षान्तिर्वरीयसि नमः पुरुषाय भूम्ने ॥ ३१ ॥

श्रीशुक उवाच —
इत्थं स्वभर्तृगदितं भगवन्महित्वं
संस्मृत्य विस्मितधियो यमकिङ्करास्ते ।

---

अकृतविष्णुकृत्यान् अननुष्ठितविष्णुपादार्चनादिकर्मणः[1] ॥ २९ ॥

कृष्णाङ्घ्रिपद्ममधुलिट् कृष्णपादारविन्दमकरन्दं संसेवमानः पुमान् स्वकर्मनिर्मितेषु मायागुणेषु विषयेषु न रमते पुरुषार्थबुद्धिं न करोति । यतः कर्मणः पुनः रजः रागः स्यात् तादृशं कर्म । तुशब्देन कर्दमप्रक्षालनमिवेति दर्शयति ॥ ३० ॥

यत् स्वपुरुषैरसत्कृतं नोऽस्माकं तत् क्षम्यतामित्यन्वयः । नविदुषां हरेर्माहात्म्यमजानताम् । ननु क्षान्त्यर्थं को दण्ड इति तत्राह–रचितेति । किमनेनानायासेनेति तत्राह—नम इति । द्रव्यादि-लक्षणदण्डमन्तरेण कथं क्षान्तिरिति तत्राह—क्षान्तिरिति । वरीयसि वरतरे परतमे । पुरुषाय नमः इत्येतावता द्रव्यादिदानाधिकेन[2] क्षान्तिर्भवतीति शेषः । 'भूयिष्ठां ते नम उक्तिं विधेम' इति श्रुतेः । सर्वदा सन्निहिता सन्तिष्ठते महति क्षमेति सप्तमी[3] ॥ ३१ ॥

---

[1] यत् येषां जिह्वेत्याद्यन्वयः । अत्र 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्य-मात्मनिवेदनम् ॥' इत्युक्तनवके कीर्तनं स्मरणं वन्दनं चेति त्रिकं साक्षादुक्तम् । तदितरषट्कं तु विष्णुकृत्य-पदेनोच्यत इति ज्ञातव्यम्—चेट्टी

[2] द्रव्यादिदानादधिकेन नमस्कारेणेति यावत् ।

[3] वरीयसि इत्यत्र ।

तेनाच्युताश्रयजनं प्रतिशङ्कमाना
द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ॥ ३२ ॥

तस्मात् सङ्कीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ।
महतामपि कौरव्य विध्ध्येकान्तविनिष्कृतम् ॥ ३३ ॥

शृण्वतो गृणतो वीर्याण्युद्दामानि हरेर्मुहुः ।
यथा सुजातया भक्त्या शुध्येन्नात्मा व्रतादिभिः ॥ ३४ ॥

इतिहासमिमं गुह्यं भगवान् कुम्भसम्भवः ।
कथयामास मलय आसीनो हरिमर्चयन् ॥ ३५ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

॥ अथ चतुर्थोऽध्यायः ॥

राजोवाच —

देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ।
सामासिकस्त्वया प्रोक्तो यस्तु स्वायम्भुवेऽन्तरे ॥ १ ॥

---

अंहसां पापानाम् एकान्तविनिष्कृतं नियतं प्रायश्चित्तम् । न केवलं स्त्रीशूद्रादीनां नामसङ्कीर्तनं विधीयते (किन्तु) अन्येषामपीति भावेनाह—महतामिति ॥ ३३ ॥

सर्वाणि साधनान्यनुष्ठीयमानान्यपि भक्तिसहितानि बलवन्तीत्यभिप्रेत्याह—शृण्वत इति ॥ ३४ ॥

कुम्भसंभवोऽगस्त्यः । मलये पर्वते ॥ ३५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे तृतीयोऽध्यायः ।

॥ अथ चतुर्थोऽध्यायः ॥

'मुह्यन्ति यं सूरयः' इत्यत्र यदुक्तं ब्रह्माज्ञेयमाहात्म्यं हरेः तत्, 'जन्माद्यस्य यतः' इत्यत्र च यः सर्गविशेषः प्रतिज्ञातः सोऽपि भगवदेकनिष्ठ इति प्रतिपाद्यतेऽस्मिन्नध्याये । तत्र तृतीयादौ कथितस्सर्गो भगवदेकनिष्ठः, उतान्यनिष्ठः, आहोस्विदन्यनिष्ठोऽपि भगवत्प्रसादायत्त इत्यभिप्रेत्य राजा उक्तार्थमनूद्य तद्विस्तरं ब्रूहीत्याह—देवेति । सामासिकः संक्षिप्तः ॥ १ ॥

तस्यैव व्यासमिच्छामि श्रोतुं ते भगवन् यथा ।
अनुसर्गं यथा शक्त्या ससर्ज भगवान् परः ॥ २ ॥

सूत उवाच —

इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ।
प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः ॥ ३ ॥

ऋषिरुवाच —

यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ।
अन्तस्समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥

द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ।
मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥

ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ।
राजोवाच महान् सोमो मन्युं प्रशमयन्निव ॥ ६ ॥

मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ।
विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥

---

व्यासं प्रपञ्चम् । ते तव सकाशात् अनुसर्गम् अवान्तरसर्गम् ॥ २ ॥

शुकेन राजप्रश्नमादृत्य परिहार उक्तः, उतानादृत्यान्यकथान्तरमवादि, (यद्वा) श्रुत्वा स्मित्वा तूष्णीं स्थितं किमिति शौनकादीनां हार्दं प्रश्नं परिहरति सूत इत्याह — सूत इति । अनेन सूतशौनकसंवादो न समाप्तः । किञ्च शौनकादिप्रश्नोऽप्ययमेव । अयमेव परिहारोऽपीति ध्वनितम् ॥ ३ ॥

भगवत्प्रसादायत्तत्वात् मन्ददृष्ट्याऽन्यनिष्ठवत् प्रतीयमानोऽपि तदेकनिष्ठ इति लक्षणस्य नातिव्याप्तिरिति दर्शयितुं प्रकृतार्थानुवादपूर्वकमुपक्रमते — यदेति । प्रचेतस इति तुल्यनामानः प्राचीनबर्हिषः दश पुत्राः यदाऽन्तस्समुद्रादुत्थिताः द्रुमैर्वृतां गां भूमिं ददृशुः ॥ ४ ॥

तदा मुखतो वायुमग्निं च ससृजुरित्यन्वयः । तेषां वृक्षाणां दिधक्षया दहनेच्छया ॥ ५ ॥

तत्र चन्द्रेण तत्कोपशान्तिप्रकारं कथयति — ताभ्यामिति । ताभ्यामग्निवायुभ्याम् ॥ ६ ॥

किमाहेति तत्राह — मा द्रुमेभ्य इति । क्रुधद्रुहेत्यादेश्चतुर्थी । तत्र हेतुमाह — विवर्धयिषव इति । विवर्धयिषवः प्रजावृद्धिं करिष्णवो यूयं पतयः पातारः स्मृता इति यदतो द्रुमेभ्यो द्रोग्धुं नार्हथेत्यन्वयः ॥ ७ ॥

आदौ प्रजापतिपतिर्भगवान् हरिरव्ययः ।
वनस्पतीनोपधीश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥

अन्नं चरणामचरा ह्यपदः पादचारिणाम् ।
अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥

यूयं च पित्राऽन्वादिष्टा[1] देवदेवेन चानघाः ।
प्रजासर्गाय हि कथं वृक्षान् निर्दग्धुमर्हथ ॥ १० ॥

आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ।
पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥

तोकानां पितरौ बन्धू दृशः पक्ष्म स्त्रियः पतिः ।
नृपः प्रजानां भिक्षूणां गृह्यज्ञानां बुधः सुहृत् ॥ १२ ॥

अन्तर्देहेषु भूतानामात्माऽऽस्ते हरिरीश्वरः ।
सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥

---

दाहे नारायणानुग्रहदूरत्वं भवतां स्यादित्यभिप्रेत्याह — **आदाविति** । ऊर्जं पित्रन्नम् इषं देवान्नम् ॥ ८ ॥

वनस्पत्योषधीनामूर्जाख्यान्नत्वं कथम् ? अत्राह— **अन्नमिति** । अचराश्चराणामन्नमित्याद्यन्वेतव्यम् ॥ ९ ॥

मार्गं विशिनष्टि— **पित्रेति** ॥ ११ ॥

अनन्यशरणानां वृक्षाणां दाहे शरणागतवधदोषोऽपि युष्माकं स्यादित्याशयवानाह—**तोकानामिति**। तोकानां बालानां पितरौ मातापितरौ । बन्धू इत्येतत् सर्वत्रान्वेतव्यम् । गृही गृहस्थः भिक्षूणाम् । अज्ञानां ज्ञानदानाख्यजीवनेन ॥ १२ ॥

किञ्चानेनेश्वरद्रोहोऽपि स्यादित्याशयवानाह—**अन्तरिति** । भूतानामिति विशेषणाद् वृक्षदाहेनेश्वरदाहः कथं स्याद् भूतदाहाकरणादिति तत्राह —**सर्वमिति** । तस्य हरेर्धिष्ण्यं निवासस्थानम् । अनेन दर्शनेन किं फलं स्यात् ? अत्राह – **एवमिति** । असौ हरिः ॥ १३ ॥

---

[1] पित्रा त्वादिष्टा—ख

यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ।
आत्मजिज्ञासया यच्छेत् स गुणानतिवर्तते ॥ १४ ॥

अलं दग्धैर्द्रुमैर्दीनैः [1]खिलानां शिवमस्तु वः ।
वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥

इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ।
सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे ॥ १६ ॥

तेभ्यस्तस्यामभूद् राजन् दक्षः प्राचेतसः किल ।
यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥

यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ।
रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥

मनसैवाऽसृजत् पूर्वं प्रजापतिरिमाः प्रजाः ।
देवासुरमनुष्यादीन् नभःस्थलजलौकसः ॥ १९ ॥

तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ।
विन्ध्यपादानुपव्रज्य सोऽचरद् दुष्करं तपः ॥ २० ॥

---

इतोऽपि कोपो न कार्य इत्याह—यः समुत्पतितमिति । देहे आकाशात् हृदयाकाशादुत्पतितमुज्ज्वलितं मन्युं यो यच्छेत् । कथम्? आत्मनः परमात्मनः जिज्ञासया विचारेण । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति श्रुत्यर्थपर्यालोचनया । भूतद्रोहेण श्रीनारायणद्रोह एव स्यादिति चिन्तया, स पुमान् गुणान् संसारहेतुभूतांस्तरतीत्यन्वयः ॥ १४ ॥

वार्क्षी वृक्षदुहिता । वरा वरणीया ॥ १५ ॥

वरः श्रेष्ठः आरोहो नितम्बप्रदेशः यस्याः सा तथा ताम् । [2]आप्सरसीम् अप्सरोजातिमतीम् ॥ १६ ॥ यस्य दक्षस्य ॥ १७ ॥

पूर्वमादिसृष्टौ । इमाः प्रजाः मनसैवासृजत् । [3]प्रजापतिः ब्रह्मा ॥ १९ ॥

यो ब्रह्मणा कृतः प्रजासर्गः तमबृंहितम्[4] अपूर्णं दृष्ट्वा ब्रह्मानुज्ञया विन्ध्यगिरेः पादान् प्रत्यन्त-

---

[1] शेषाणाम्—स. चेट्टी च
[2] आप्सरसीं अप्सरसः प्रम्लोचायाः सुताम्—स.
[3] प्रजापतिः दक्षः—चेट्टी
[4] स्वपरकार्याननुकूलत्वेनापूर्णम्—स

तत्राघमर्षणं नाम तीर्थं पापहरं परम् ।
उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥
अस्तौषीद् हंसगुह्येन भगवन्तमधोक्षजम् ।
तुभ्यं तदभिधास्यामि कस्यातुष्यद् यतो हरिः ॥ २२ ॥

प्रजापतिरुवाच —

नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे ।
अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानावधये स्वयम्भुवे ॥ २३ ॥

न यस्य सख्यं पुरुषो वेत्ति सख्युः सखा वसन् संवसतः पुरेऽस्मिन् ।
गुणो यथा गुणिनोऽव्यक्तदृष्टिस्तस्मै महेशाय नमस्करोमि ॥ २४ ॥

---

पर्वतान् उपगम्य तपोऽचरत् । स प्राचेतसो दक्षः । यो मनसाऽसृजत् स तपोऽचरत् इति एकवाक्यं वा ॥ २० ॥

नाम्ना हंसगुह्येन स्तोत्रेण । कस्य दक्षस्य । यतो येन ॥ २२ ॥

सर्वनामसंज्ञाभावाल्लोकवैलक्षण्यप्रदर्शनाय[1] । पराय नम इत्यन्वयः । परत्वमुपपादयति— **अवितथेत्यादिना** । अवितथा यथार्था क्वाप्यप्रतिहता अनुभूतिर्यस्य स तथा तस्मै, सत्यज्ञानाय । 'सत्यं ज्ञानम्' इति श्रुतेः । गुणत्रयेणाभासः सृष्टिः तन्निमित्तयोः प्रकृतिपुरुषयोर्बन्धुभूताय, तत्र स्थित्वा ताभ्यां सृष्टौ प्रवर्तमानाय, गुणत्रयप्रतीतिनिमित्ताव्यक्ताश्रयाय वा । 'सतो बन्धुमसति निरविन्दन्' इति श्रुतेः । गुणेषु शब्दादिविषयेषु [2]यथार्थबुद्धिर्येषां ते तथा तैर्बहिर्मुखैरदृष्टधाम्नेऽज्ञातस्वरूपाय । 'न चक्षुषा पश्यति कश्चिदेनम्' इति श्रुतेः । निवृत्तो मानावधिः परिमाणलक्षणेयत्ता यस्मात् स तथा तस्मै । 'अनन्तं ब्रह्म' इति श्रुतेः । जन्मादिमतः कथमनन्तत्वमिति तत्राह— **स्वयम्भुव इति** । स्वयं भुवे स्वतः सिद्धाय । 'स भगवान् कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति' इति श्रुतेः ॥ २३ ॥

गुणतत्त्वबुद्धिभिरदृष्टधाम्न इत्येतदुपपादयति — **न यस्येति** । अयं पुरुषो यस्य सख्यं न वेत्ति तस्मै महेशाय शिवादुत्तमाय[3] नमस्करोमीत्यन्वयः । कीदृशस्य ? अस्मिन् पुरे शरीरे संवसतः । स्वयं च सहैव वसन् । 'तद् दूरे तद्वन्तिके' इति श्रुतेः । सख्युः सखेत्यनेनैकस्मिन् पुरे वर्तमान-

---

[1] सर्वनामसंज्ञाभावो लोकवैलक्षण्यप्रदर्शनायेति पेशलम् । [2] पुरुषार्थत्वबुद्धिरिति याचन ।
[3] शिवाद्युत्तमाय—च शिवादुयुत्तमाय—छ

देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥ २५ ॥

---

त्वादुभयोः समम् । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्' इति श्रुतेः । अत्र दृष्टान्तमाह—**गुण इति** । यथा कश्चित् पुरतः स्थितोऽपि गुणभूतो भृत्यः गुणिनः प्रधानभूतस्य राज्ञो ममाऽसौ सखेति गम्भीरेण राज्ञा चिन्तितं सख्यं न वेत्ति । कुतः ? अत्राह—**अव्यक्तेति**[1] । अस्पष्टदृष्टिः । भृत्यस्य स्थूलज्ञानत्वाद् राज्ञः सूक्ष्मदृष्टित्वादित्यर्थः । 'गुणो रूपादिर्गुणिनो द्रव्यस्य संबन्धं यथा न वेत्ति । कुतः ? अव्यक्तदृष्टिः । दृष्टिरहितत्वात् जडत्वात्' इत्येतदपव्याख्यानं 'यथा राज्ञः प्रियत्वं तु भृत्यो वेद न चात्मनः । तथा जीवो न यत्सख्यं वेत्ति तस्मै नमोऽस्तु ते' इत्यनेनापहस्तितमिति ज्ञातव्यम् ॥ २४ ॥

'मुह्यन्ति यं सूरयः' इति यदुक्तं तदधुना स्पष्टयति—**देह इति** । 'ता आप ऐक्षन्त' इत्यादिवद् देहादीनां जडानां ज्ञातृत्वादिधर्मानुपपत्त्या तद्व्यतिरिक्तः कश्चित् ज्ञानाश्रयोऽङ्गीकर्तव्यः । जीवस्य ज्ञानाश्रयत्वेऽपि सम्यक् स्वपरवेदनासामर्थ्यस्य प्रत्यक्षत्वेन परस्य हरेस्तज्ज्ञानाविषयत्ववर्णनेन माहात्म्यमाविर्भूतं न स्यादिति कश्चिद् विशिष्टः सर्वज्ञोऽपेक्षितः तस्य सर्वज्ञत्वविशिष्टान्यसद्भावे घटते । तेनान्यैश्च सम्भूयाप्यवेद्यमहिमा हरिरित्यनेन हरेर्निरतिशयमाहात्म्यं विज्ञातं स्यादिति तदर्थं देहादिशब्देन तदभिमानित्वेन ते लक्ष्यन्ते, संबन्धात् । तथाहि प्रधानाभिमानित्वाद् वैश्रवणादयो देहादय इति सामानाधिकरण्येनोच्यन्ते न तु तादात्म्यात् ।[2] असवः प्राणाभिमानिनो मरुतः । अक्षाः इन्द्रियाणि तदभिमानिन इन्द्राग्निवरुणादयः । मनव इति मनसोऽन्तःकरणस्य वृत्तिबाहुल्याद् बहुवचनम् । तस्याभिमानी रुद्रः । भूतानामभिमानिनः पृथिव्याद्याः सुपर्णाद्या वा । मात्राः शब्दादयः तद्देवताः रुद्रसूनवः सौपर्ण्याद्या वा । इत्येते देवाः वैश्रवणाद्या आत्मानं स्वस्वरूपमन्यं स्वव्यतिरिक्तं प्रपञ्चं च न विदुः । यद् उभयस्मात् परमुत्तमं ब्रह्म तन्न विदुरिति किमुत ? तत्प्रसादमन्तरेणेति शेषः । पुमान् जीवाभिमानी ब्रह्मा स्वात्मानं प्रपञ्चं चेति सर्वं वेद । न केवलं तावदेव किन्तु तत्तद्वस्तुसमवेतगुणांश्च शब्दांस्तद्विशेषांश्च क्रियादींश्च वेद । तर्हि परमात्मानं वेद किम् ? नेत्याह—**तज्ज्ञ इति** । तानि सर्वाणि जानातीति तज्ज्ञोऽपि ब्रह्मा तं सर्वज्ञं हरिं न वेद । यथाऽसौ हरिः स्वात्मानं स्वव्यतिरिक्तं सर्वं वेत्ति, तथेति शेषः । तर्ह्यसौ स्वपरिच्छेद्यत्वेन परिमितः किम् ? नेत्याह—**अनन्तमिति** । अनन्त-

---

[1] सत्यधर्मतीर्थास्तु व्यक्तदृष्टिरिति छित्वा स्थूलदृष्टेति व्याचक्रुः ।

[2] 'देहाभिमानी वैश्रवणः' इत्यधिकः चपाठः ।

**यदोपरामो मनसो नामरूपरूपस्य दृष्टिस्मृतिसंप्रमोषात् ।**
**य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥**

---

मात्मानमपरिच्छेद्यत्वेन ज्ञातारम् । तस्य ज्ञानस्य यथार्थत्वात् । अतः स एव सर्वमुख्यः सर्वज्ञो न ब्रह्मेति । 'तद् ब्रह्मावेत् अहं ब्रह्मास्मि' इति श्रुतिः । 'विष्णोर्नु कं वीर्याणि' इति श्रुतिश्च । एवंविधं परमात्मानम् ईड इत्यन्वयः । एतत् सर्वं 'देहमानी वैश्रवणो मरुतः प्राणमानिनः । इन्द्राद्या इन्द्रियात्मानो रुद्रोऽन्तःकरणात्मकः । नैते विदन्ति स्वात्मानं परं चापि विमोहिताः । जीवाभिमानी ब्रह्मा तु सर्वं वेद प्रजापतिः । सोऽपि वेद हरिं नैव सम्यक् सैव हि सर्ववित् ।' इत्यनेन सिद्धम् ॥ २५ ॥

अनुमानतोऽपि तज्ज्ञानं सुकरमित्याह—**यदेति** । यदा स्वप्नसुषुप्त्यादौ नामरूपरूपस्य नामरूपात्मकप्रपञ्चापादकस्य मनसो दृष्टिस्मृतिसंप्रमोषात् चाक्षुषस्मरणलक्षणज्ञाने प्रमुष्यापहृत्योपरामः निर्व्यापारावस्था तदा यः केवलया स्वसंस्थया ईयते, जीवस्यास्वातन्त्र्यात् स्वप्नावबोधादिदर्शनाच्च, जीवेच्छाराहित्येन शुद्धया स्वरूपसत्तया स्वप्नादिनियामकत्वेन जीवादन्य ईश्वरोऽस्तीति ज्ञायत इत्यन्वयः । तस्मै हंसाय नित्यशुद्धाय श्वासरूपाय वा नमः । उपस्तिर्विशिष्टाधिष्ठानेन च भाव्येति[1] अतस्तद्भावमाह—**शुचिसद्मन इति** । शुचिर्वायुरेव सद्म निवासस्थानं यस्य स तथा तस्मै । नामरूपात्मकप्रपञ्चविषये जीवस्य चाक्षुषमानसज्ञानापहाराद्वा । 'यदोपरामो मनसः स्वप्नसुप्तिलयादिषु । तदाऽवस्थाप्रबोधादिकारणत्वेन केशवः । अस्वातन्त्र्यात् तु जीवस्य विद्यतेऽन्यो नियामकः । जीवप्रवृत्त्यानुकूल्याज्ज्ञायतेऽसौ सदा विभुः' इत्येतत्प्रमाणानुगृहीतव्याप्तिकत्वाल्लिङ्गमव्यभिचारीति भावः[2] ॥ २६ ॥

---

[1] उदास्तौ .... .... भाव्यम्—ङ

[2] यदा मनस उपरामः स्वप्नाद्यवस्थायाम् । ननु कथं स्वप्ने मनस उपरामः ? मनसैव हि स्वाप्नानपि पश्यति । आह–नामरूपरूपस्य । नामरूपात्मकबाह्यप्रपञ्चनिरूपकस्य मनस एवात्रोपराम उच्यते । न सर्वात्मना । यदा बाह्यप्रपञ्चान्मनस उपराम इत्युक्तं भवति । तदपि कुतः ? नामरूपरूपस्य दृष्टिस्मृतिसम्प्रमोषात् । नामरूपात्मकस्य जगत या दृष्टिः प्रत्यक्षानुभवः या च स्मृतिः तयोः सम्प्रमोषात् । अत्रापीयं व्यवस्था । स्वप्नावस्थायां केवलं दृष्टेः सम्प्रमोषः । न स्मृतेः । स्मृतिमूला हि स्वाप्नी सृष्टिर्भवति । सुषुप्तिप्रलययोः मूर्च्छायां च उभयोरपिसंप्रमोष इति । तथा च दृष्टेः दृष्टिस्मृत्योर्वा संप्रमोषाद् यदा मनस उपरामस्तदा केवलभगवत्संस्थित्यैव जीवस्य स्वापप्रबोधौ भवतः । अन्यथा क एनं स्वपयेत् ? कश्च प्रबोधयेत् ? न हि जीवः स्वयं तयोः प्रभुरिति स्फुटम् । एवं जीवस्वापादिनियामकत्वेन यस्य सत्ता स्फुटमीयते ज्ञायते तस्मै हंसाय नमः । कीदृशाय ? शुचिसद्मने । शुचौ प्राणवायौ स्थित्वा हंसमन्त्रवेद्याय । शुद्धे सतां मनसि कृतसद्मने च । हंसः शुचिषत् इति हि मन्त्रवर्णः । —इति गोविन्दाचार्याः

मनीषिणोऽन्तर्हृदि सन्निवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ।
वह्निं यथा दारुणि पाञ्चदश्यं मनीषया निष्कृषन्तीह गूढम् ॥ २७ ॥

स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ।
स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥

---

विद्वत्प्रत्यक्षानुगृहीतत्वाच्च लिङ्गं बलिष्ठमित्याशयेनाह—मनीषिण इति । मनोनियमनसमर्थाः मनीषिणः । मनीषयाऽन्तर्हृदि सन्निवेशितं भगवन्तं निष्कृषन्ति निष्कृष्य जानन्तीत्यन्वयः । कथमिव ? अग्निविदो दारुणि गूढं वह्निं निर्मथ्य जानन्ति यथा तथा । जीवराशिशरीरेऽन्तर्हितमिति शेषः । त्रिवृद्भिः इच्छाज्ञानक्रियात्मना त्रिधा वर्तमानाभिर्नवभिः विमलोत्कर्षणीज्ञानक्रियेत्यादिनवत्वसंख्याविशिष्टाभिः स्वरूपभूताभिः शक्तिभिर्लक्षितमिति शेषः[1] । दशेन्द्रियमनोबुद्धिप्राणप्रधानाख्यानि चतुर्दशतत्त्वानि । तेभ्य उत्तमत्वेन पञ्चदशाश्रयत्वात् पाञ्चदश्यम् । मनोबुद्ध्यहङ्कारचित्तचेतनाभेदेन तत्प्रेरकतया स्थितत्वाद् वा । तदुक्तम्—'इच्छादित्वेन त्रिविधा विमलाद्यास्तु शक्तयः' इति । चशब्दात् तद्भिन्नास्तज्जाताश्चान्याः सन्तीति ग्राह्यम् । तदप्युक्तम्—'विष्णोः स्वरूपभूता यास्ताभ्यस्तन्नामिकाः पराः । जायन्ते तत्प्रसादेन ताश्च पीठेऽभिपूजयेत् । तद्भिन्नजीवास्तस्यैव प्रसादात् तत्समीपगाः' इति । अनेन नवभिः नवद्वाराभिव्यक्ताभिः त्रिवृद्भिः गुणत्रयात्मभिरित्येतन्निरस्तम् । दशेन्द्रियाद्याश्रयत्वेन पाञ्चदश्य इति व्याख्यातत् । तत्र किं मानमितीयमाशङ्का । 'दशेन्द्रियाणि च मनोबुद्धिप्राणप्रधानकाः । चतुर्दशैषां परमः पाञ्चदश्यो हरिः स्मृतः । बुद्धिभेदेन चैतेषु पाञ्चदश्योऽथ संस्थितः' इत्यनेन परिहर्तव्या । अनेन पञ्चदशीतिसंख्यातिथौ वर्तमानत्वात् पाञ्चदश्यमित्येतदपव्याख्यानं निरस्तमिति ज्ञातव्यम् ॥ २७ ॥

यो मनीषिभिः निर्मथ्य ज्ञातः स हरिः मम प्रसीदतामित्यन्वयः । किमन्येभ्यो विशिष्य अस्य प्रसादः प्रार्थ्यते, 'प्रजापते न त्वदेतान्यन्यः' इत्यादिश्रुतेरन्येषामप्यतिशयितमाहात्म्यप्रतीतेरित्याशङ्क्य 'एष ह्येव शतानन्दः' इत्यादिश्रुतेः इतरेषामानन्दादेरियत्ताविशिष्टत्वात्, 'एतस्यानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति', 'न ते विष्णो जायमानः' इत्यादिश्रुतेः, अस्यापरिच्छिन्नानन्दानुभवरूपत्वादित्याह—अशेषेति । अशेषो विशेष इयत्ताख्य अशेषविशेषः । स च माया प्रकृतिश्च । ते अशेषविशेषमाये तयोर्निषेधो यस्य तत् तथा । तच्च निर्वाणमशरीरभोग्यं च यत् सुखं तस्य अशेषविशेषमायानिषेधनिर्वाणसुखस्यानुभूतिः एतादृशानन्दोऽयमिति स तथा । अपरिमितप्राकृतशरीराभोग्यानन्दानुभवरूप

---

[1] विमला, उत्कर्षिणी, ज्ञाना, क्रिया, योगा, प्रह्वी, सत्या, ईशाना, अनुग्रहा चेति नव भगवतः शक्तयः । ताः प्रत्येकं त्रिवृतः इच्छाज्ञानक्रियाभेदेन त्रिविधाः । इच्छाविमला, ज्ञानविमला, क्रियाविमला इत्यादि ।

यद् यन्निरुक्तं वचसा निरूपितं धियाऽक्षभिर्वा मनसा वोत[1] यस्य ।
मा भूत् स्वरूपं गुणरूपबृंहितं स वै गुणापायनिसर्गलक्षणः ॥ २९ ॥

---

इत्यर्थः । 'इयत्ता तु विशेषः स्याद् आनन्दादौ तदुज्झितेः । सर्वैर्विशेषै रहित उच्यते हरिरव्ययः । अप्राकृतस्वरूपत्वन्निर्मायश्चेति कथ्यते' इति । अतोऽयमेवार्थ इति ज्ञायते । प्रजापत्यादिशब्द-मुख्यार्थोऽप्ययमेवेति भावेनाह — स सर्वनामेति । अनेन उपन्यस्ता श्रुतिः सावकाशेति ज्ञातव्यम् । 'यो देवानाम्' इति श्रुतेश्च । नीरूपस्य सर्वनामत्वं कथमित्यत उक्तम् — स चेति । विश्वानि रूपाणि यस्य स तथा, विश्वस्य रूपमिव रूपं यस्येति अत्र विश्वरूपसदृशो विश्वरूप इति अन्यथा योज्यम्। ननु प्रतीतार्थं परित्यज्य अप्रसिद्धार्थकल्पने किं कारणमित्यतः चशब्दसूचितायाः 'तद्रूपसदृशं रूपं यतः सर्वस्य सर्वदा । सर्वरूपो यतः शब्दमुख्यार्थः सर्वनामकः' इति स्मृतेः समाख्यानं कारणम् । स स इति तच्छब्दद्वयेन तच्छब्दयुक्तसर्वनामत्वसर्वरूपत्वे परामृशति । नन्वदृष्टत्वादेकस्य सर्वनामत्वादि कथं युज्यते ? न च श्रौतत्वाद् युक्तिमत्[2] श्रुतीनाम् अनन्तत्वेनैकत्रान्यथोक्तिसंभवादिति तत्राह — अनि-रुक्तेति । 'विचित्रशक्तिः पुरुषः पुराणः' इति श्रुतेः, गतिसामान्यादितिसूत्रेण श्रुतीनामेकविषयत्वेन ज्ञानोत्पादनधर्मत्वस्य निर्णीतत्वात् । ननु हरेः सर्वनामत्वे अवचनेनैव प्रोवाचेत्यादिश्रुतेः का गति-रित्यतो वाह — अनिरुक्तेति । सर्वात्मनेति शेषः । 'अनिर्वाच्या स्वकीया ज्ञानशक्तिः' इत्येतत् श्रुतेर्गुणाविर्भावलक्षणायाः दोषाविष्कारोक्त्यसंभवेनासङ्गतं स्यात् इति[3] । 'अलौकिकत्वान्नो विष्णु-रनिरुक्तो निरूपितः । तथापि वेदेषूक्तत्वादुक्तो रूपी स एव च'[4] इति वाक्यविरुद्धत्वाच्चोक्त एवार्थः ॥ २८ ॥

स च विश्वरूप इति विश्वरूपोक्तिं विशदयति — यद् यदिति । वचसा घटत इति निरुक्तं धियाऽक्षभिर्मनसा निरूपितं यद् यत् तत् तत् अस्य हरेः स्वरूपं मा भूत् न भवति । कुतः ? सत्वादि-गुणसमूहेन वर्धितत्वात् । तर्हि स कीदृश इति तत्राह — स वा इति । सत्त्वादिगुणानामपायः राहित्यमेव निसर्गलक्षणं स्वाभाविकलक्षणं यस्य स तथा । वा इत्यनेन 'केवलो निर्गुणश्च' इति श्रुतिं प्रमाणयति । अनेन जगद्रूपं त्रिगुणात्मकं, भगवद्रूपमप्राकृतमिति निरणायि । मा भूदित्यनेन जगत् साक्षात् भगवद्रूपं न जानीहीत्यर्थोऽपि सूचित इति ज्ञातव्यम् ॥ २९ ॥

---

[1] मनसोत—क [2] हरिः सर्वनामा तथा श्रुतत्वादिति युक्तिः । अस्या असिद्धिमाशङ्क्य समाधीयते ।

[3] ज्ञेयमिति शेषः ।

[4] 'अलौकिकत्वान्नो विष्णुर्निरुक्तो नो निरूपितः । तथापि वेदेषूक्तत्वादुक्तो रूपित एव च ।— इति हृषिकेशीय-स्तात्पर्यपाठः ।

**यस्मिन् यतो येन च यस्य यस्मै [1]यं यो यथा[2] कुरुते कार्यते वा ।**
**परावरेषां परमं प्राक् [3]स्वसिद्धं तद् ब्रह्म तद्धेतुरनन्यदेकम्[4] ॥ ३० ॥**

---

कालकारणत्वं च ब्रह्मणः स्वरूपलक्षणमित्याह—**यस्मिन्निति** । यस्मिन्नधिकरणभूते काल इदं वर्तते । यतो यस्मादपादानभूतात् कालादभूत्, येन कारणभूतेन कालेन जायते, यस्य संबन्धभूतस्य कालस्याधीनमिदं, यस्मै संप्रदानभूताय कालाय कल्पते, यं कर्मभूतं कालं प्रतीक्षते, यः कर्तृभूतः कालः प्रेरयति, यथा येन प्रकारेण पुरुषः कर्म कुरुते स्वयं चापरेण कार्यते तत् तस्य सप्तविभक्त्यर्थस्य कालस्य प्रकाराणां प्रेरकस्य च यत् परावरेषां ब्रह्मादीनां सकाशात् प्राक् पूर्वं स्वसिद्धं कार्यकारणात्मकप्रपञ्च-व्यतिरिक्तत्वेन स्वत एव सिद्धम् । अत एव परममत्युत्तमम् । अनन्यत् अन्यसादृश्यरहितम्, एकम् अवतारादिरूपाभिन्नं तद् ब्रह्म हेतुः कारणमित्यन्वयः । तत्तत्कालस्य सदातनसत्ताप्रदत्वमस्यैव नान्य-स्येति द्योतनाय सप्तविभक्त्यर्थत्वेन कालो विशेषितः । अन्यथा कालस्य कारणं ब्रह्मेति कृतं स्यादिति । तदुक्तं—'सर्वसत्ताप्रदत्वतः' इति । तत्तत्कालीनसर्ववस्तुसत्ताप्रदत्वाद् वा । कुतस्तत्कल्पनमिति चेत् 'विभक्त्यर्थस्य कालस्य प्रकाराणां च कारणम् । एक एव परो विष्णुः' इति स्मृतेः अयमेवार्थो ननु 'यस्मिन्नित्यादिना क्रियमाणकारकफलरूपेण ब्रह्मैवावस्थितम्' इति । 'अनन्यः सदृशाभावादेको रूपाद्यभेदतः' इति वचनादनन्यदेकशब्दयोरुक्त एवार्थः ॥ ३० ॥

---

[1] यद् यो यथा कुरुते कार्यते वा—च [2] यदा—व [3] प्रसिद्धम्—व

[4] 'यस्मिन्निदं सर्वं तन्मुख्याधिकरणं ब्रह्म । यत इदमुद्भूतं तदपादानमपि ब्रह्म । येनेदं तत् करणमपि ब्रह्म । यस्मा इदं कल्पते तत् संप्रदानमपि ब्रह्मैव । यस्याधीनमिदं तदपि ब्रह्म । यमिदं प्रेत्यमिसंविशति त कर्म च मुख्यं ब्रह्मैव । यश्च कर्ता तद् ब्रह्म । एवं सप्तविभक्तीनां मुख्यार्थो ब्रह्मैवेति स्थितम् । ननु कथमेतत् ? भवतु नाम ब्रह्माप्यधिकरणादि । कथं ब्रह्मैव ? अन्यान्यपि भूतलादीनि संभवन्त्यधिकरणादीन्यपादानानि वा । नेत्याह—तद्धेतुः । तेषां सर्वेषां ब्रह्मैव हेतुः सत्तादिप्रदं चेति तदेव मुख्यतो विभक्त्यर्थो नान्ये । एवं यदात-देत्यादिपदबोधितो यः कालः, कुरुते कार्यत इत्यादिक्रियापदबोधिता ये कर्तृत्वकार्यत्वादयः प्रकाराः तदपि ब्रह्मैव । कालस्य प्रकाराणां च भगवदधीनत्वात् । ननु सृष्ट्यादिहेतुषु विरिञ्च्यादिष्वपि विभक्त्यर्थाः संभवयुः ? नेत्याह—परावरेषाम् । परेषामवरेषां च हेतूनां मुख्यहेतुः । परा इन्द्रादयोऽप्यवरा येभ्यस्तेषां ब्रह्मादीनामिति वा । अत एव ब्रह्मादिसृष्टेरपि प्राक् प्रलयार्णवशायितया प्रसिद्धम् । नन्वेतादृशं किञ्चिदन्यदपि वस्तु भवेत् ? नेत्याह—अनन्यत् । तदेकमेव सर्वपदमुख्यार्थः । नान्यत् किमपि । न केवलमेतावत्, तस्य सर्वाण्यपि रूपाणि सर्वपदवाच्यानि । तदेतदप्याह—एकम् । अनेकरूपमप्येकरूपं, सर्वरूपेष्वभिन्नमिति हि तदर्थः । एतेन स सर्वनामा स च विश्वरूपः' इति पूर्वोक्तं विवृतम्'—इति गोविन्दाचार्याः

यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति ।
कुर्वन्ति तेषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ३१ ॥
[1]अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ।
अपेक्षितं किञ्चन सांख्ययोगयोः समं परं ह्यनुकूलं बृहत् तत् ॥ ३२ ॥

---

अनिरुक्तात्मशक्तिरित्येतद् विवृणोति — यच्छक्तय इति । विवादसंवादभुवः विप्रतिपत्तिसंप्रतिपत्त्योः भुवः विषयाः । वदतां वादं कुर्वताम् । वादिनां मतमज्ञाननिमित्तमित्याह — **कुर्वन्तीति** ॥ ३१ ॥

विवादसंवादौ च कथङ्कारं स्यातामिति तत्राह — **अस्तीति** । यद् भिन्नयोर्विरुद्धयोर्धर्मयोरपेक्षितं विषयः । किमाकारयोः ? मदन्य ईश्वरोऽस्ति नास्तीति वादिभिः प्रतिपाद्यमानयोः । भिन्नत्वविरुद्धत्वे कथम् ? अत्राह — **वस्त्विति** । भिन्नवस्तुनिष्ठत्वादेकस्मिन् वस्तुनि स्थितयोरित्यङ्गीकारे विरुद्धयोः । यद्यप्येकस्य स्वरूपेण सत्त्वं पररूपेणासत्त्वम् इति द्वौ धर्मौ स्तः । तथापि नैतादृशी एते सत्त्वासत्त्वे (किन्तु) स्वरूपस्यैवेति यत इति[2] द्योतनार्थेतिपदद्वयम् । यच्च किञ्चनालौकिकं यच्च सांख्ययोगयोः समं कर्मानुष्ठानलक्षणयोगप्रतिपादककर्मकाण्डे तत्फलदातृत्वेन प्रतिपाद्यं, सांख्ये च यथार्थज्ञानसाधने वेदान्ते विचारितं, यच्चानुकूलं सर्वेषां प्रियतमं तत्तद्वादिनां तत्तद्बुद्धिजनकत्वेन तत्तदनुरूपफलदातृत्वेन वर्तमानं वा, तत् परं बृहत् परंब्रह्म प्रपद्य इति वाक्यशेषः । सर्वदा वर्तमानं न कदाप्यन्यथाभूतम् इत्यतो बृहदिति । अस्तित्वपक्ष एव श्रेयान् । न त्वितरः, तस्य दुष्टत्वादिति विशदीकरणाय सांख्ययोगयोरिति विशेषणम् । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतिं हिशब्देन सूचयति । अस्ति द्वैतं वस्त्विति निष्ठा सांख्ययोगयोः; नास्ति तद् द्वैतं वस्त्वद्वैतमेवेति निष्ठाऽऽसुरीत्यतो वा हीति । तदुक्तम् — 'मदन्यो नास्ति सर्वेश इति विद्यासुरं मतम् । अस्तीति दैवमुभयोर्हरिरेव ह्यपेक्षितः । निषेधविध्योर्विषयः फलदाता च केशवः । तादृग्बुद्धेः कारणं च स्थानयोश्चोच्चनीचयोः' इति ॥ ३२ ॥

---

[1] अस्तीति नास्तीति श्लोकस्यायमर्थः — भिन्नविरुद्धधर्मयोः भिन्नविरुद्धधर्मप्रतिपादकयोः, एकस्थयोः एकवस्तुविषयकयोः अस्तीति नास्तीति च वस्तुनिष्ठयोः, मदन्यदिति शेषः । मदन्यदीश्वराख्यं वस्तु अस्तीति दैवं मतम् । तादृशं वस्तु नास्तीति आसुरं मतम्, तयोर्मतयोरित्यर्थः । अपेक्षितं तन्मतं विषयः किञ्चन लोकविलक्षणं समम् उच्चनीचस्थानयोर्यथायोग्यफलप्रदम् । अनुकूलं तादृशमतभेदेन द्विविधबुद्धिजनकम् । सांख्ययोगयोः ज्ञानयोगकर्मयोगयोः परं मुख्यतात्पर्यविषयं यत् तत् परं बृहत् ब्रह्मेति — ब।

[2] यत इतीत्यस्यान्वयो न स्पष्टः ।

योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः ।
नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदताम् ॥ ३३ ॥
यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति ।
यथाऽनिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥

---

इतोऽपि मदन्य ईश्वरोऽस्तीति पक्ष एव श्रेयानित्यभिप्रेत्याह—**योऽनुग्रहार्थमिति** । योऽनन्तो भगवान् पादमूलं भजतामनुग्रहार्थं जन्मकर्मभिर्नामानि रूपाणि च भेजे स परमो मह्यं प्रसीदतामित्यन्वयः । अलौकिकत्वेन तं विशिनष्टि—**अनामरूप इति** । देवदत्तकर्मवदीशकर्मणामप्रत्यक्षत्वाद् विष्णुमित्ररूपवदीशरूपाणामदर्शनादनामरूपः । न तु स्वरूपकर्मोज्झितत्वात् । 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं' 'अथैनमाहुः सत्यकर्मेति' 'सर्वकर्मा सर्वनामा सर्वरूपः' इत्यादिश्रुतेः । अवतारैर्नामरूपकर्मणां दर्शनाच्च । तदुक्तं 'तत्कर्मणामदृष्टत्वादनामा चाप्यदर्शनात् । अरूपस्त्ववतारेण रूपकर्माणि दर्शयन् । नित्यरूपो नित्यकर्माऽप्यव्यक्तत्वमवेक्ष्य तत् । अरूपकर्मेत्युदितो रूपकर्मोज्झितेर्नतु' इति । किञ्च भगवद्व्यतिरिक्तपुरुषानुपपन्नार्थवाचि नाम यस्य सोऽनामा । यथा 'मुक्तानां परमा गतिः', 'कमलाकान्तः' इति । कंसादिनिग्रहादवाप्तकंसारिर्मुरारिरित्यादिवाच्यार्थसमत्वात् सनामा । मूलरूपस्यात्यन्तमव्यक्तत्वादरूपः । (तदुक्तम्)—'अनामा सोऽधिकार्थत्वादव्यक्तत्वादरूपकः । कंसारित्वादिसाम्यार्थो व्यक्तरूपोऽवतारगः' इति । 'लोकदृष्ट्याऽधिकार्थानि मूलनामानि केशवे । अथ दामोदरादीनि लोकदृष्ट्या समानि तु । आनन्दोऽव्यक्तरूपस्तु मूलरूपमुदाहृतम् । स एव व्यक्तिमापन्नः प्रादुर्भाव उदाहृतः' इति । अनेन उक्तस्मृत्यर्थोऽपि स्पष्टीकृत इति ज्ञातव्यम् ॥ ३३ ॥

यथाधिकारं स्वविषयज्ञानस्य तारतम्यजनकत्वेन[1] प्रमाणसिद्धत्वान्मदन्यो नास्तीश्वर इति मतमासुरमित्याशयेनाह—**यः प्राकृतैरिति** । यो [2]भवान् प्राकृतैः ज्ञानपथैः जनानां स्वबुध्द्यनुसृतसिद्धान्तेन विभाति स ईश्वरो मे मनोरथं कुरुतादित्यन्वयः । क्व स्थित इत्यत उक्तम्—**देहेति** । अयं भावः— अधमानां जनानां जीवदेहगतो जीवः तदभिन्न इति प्रतीयते 'अहं ब्रह्मास्मि' इति । मध्यमानां जनानां देहगतः संदेहगतः अनिर्णीत इति यावत्, जीवस्तदन्यो वा हरिरिति । उत्तमानां जीवानां प्रकर्षेणाप्राकृतेनौत्पत्तिकेन ज्ञानेन देहगतो देहगाज्जीवाद्भिन्न इति शेषः । ईश्वरः पूर्णानन्दादिगुण इति प्रकाशते । तत्रोदाहरणं—**यथेति** । यथा अनिलो वायुः पार्थिवं पृथिवीकार्यं गुणं सुखदुःखभोगसाधनं शरीरमाश्रितः प्रकृतिविकृतैर्ज्ञानसाधनैरिन्द्रियैः प्राकृतानां श्वास इति, मध्यमानां शारीरः प्राण इति, अप्राकृतानामुत्तमानां सर्वदेवोत्तमः सूत्रात्मेति प्रतिभाति तथेति । 'स्वदेहस्थं हरिं प्राहुरधमा

---

[1] तारतम्ययुक्तत्वेनेति स्यात् तात्पर्यानुरोधेन । [2] भगवानिति स्यात् ।

श्रीशुक उवाच —

इति स्तवैः संस्तुवतः स तस्मिन्नघमर्षणे ।
प्रादुरासीत् कुरुश्रेष्ठ भगवान् भक्तवत्सलः ॥ ३५ ॥

कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः ।
शङ्खचक्रासिचर्मेषुधनुःपाशगदाधरः ॥ ३६ ॥

पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ।
वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥

महाकिरीटकटकस्फुरन्मकरकुण्डलः ।
काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥ ३८ ॥

त्रैलोक्यमोहनं रूपं बिभ्रत् त्रिभुवनेश्वरः ।
वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ॥ ३९ ॥

स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः ।
रूपं तन्महदाश्चर्यं विलक्ष्याऽगतसाध्वसः ।
ननाम दण्डवद् भूमौ प्रहृष्टात्मा प्रजापतिः ॥ ४० ॥

न किञ्चनोदीरयितुमशकत् तीव्रया मुदा ।
आपूरितमनोद्वारो ह्रदिन्य इव निर्झरैः ॥ ४१ ॥

---

जीवमेव तु । मध्यमाश्चाप्यनिर्णीतं जीवाद् भिन्नं जनार्दनम् । पूर्णानन्दादिगुणकं सर्वजीवविलक्षणम् । उत्तमास्तु हरिं प्राहुस्तारतम्येन[1] तेषु च । बुद्धिशुध्यनुसारेण यथा प्राणं शरीरिणाम् । श्वासमात्रं जनाः प्राहुरनिर्णीतं च मध्यमाः । देवदेवेश्वरं सूत्रमानन्दं प्राणवेदिनः ' इति स्मृतिसमाख्यासिद्धत्वात् त्रैविध्येनार्थकथनं युक्तमिति भावः ॥ ३४ ॥

[2]नेयं स्तुतिः चिह्वाग्रगुडवत् स्तुत्ये चित्तद्रव विकारहेतुरिति भावेनाह — **इतिति** ॥ ३५ ॥

नेदं रूपं मायाकल्पितं किन्तु निजमेव[3] अर्थक्रियाकारित्वादित्याशयेनाह — **रूपमिति** ॥ ४० ॥

ह्रदिन्यः ह्रदिनीभवो जलनिर्गमः ॥ ४१ ॥

---

[1] तारतम्येनेति तृतीया । तेषु च तारतम्यं प्राहुः । — इति तात्पर्यदीपिका । तेषु च तारतम्येन स्थितं हरिं प्राहुरिति वाऽर्थः । यद्यपि हरेः स्वेषु तारतम्यं नास्ति, तथापि ' सन्निधानं च तत् प्रोक्तं सामर्थ्यव्यञ्जनं हरेः ' इति वचनेन सन्निधानतारतम्येन स्थितमित्यर्थः ।

[2] इयमित्येव स्यात् । नेयं स्तुतिः ... .... हेतुरिति चेत् तत्राहेति वा । [3] सत्यमेवेत्यर्थः ।

तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् ।
चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥

श्रीभगवानुवाच —

प्राचेतस महाभाग संसिद्धस्तपसा भवान् ।
यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥ ४३ ॥

प्रीतोऽहं ते प्रजानाथ यत् ते स्याद् बृंहणं तपः ।
ममैष कामो भूतानां यद् भूयासुर्विभूतयः ॥ ४४ ॥

ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ।
विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥ ४५ ॥

तपो मे हृदयं [1]ब्रह्म तनुर्विद्या क्रियाऽऽकृतिः ।
अङ्गानि क्रतवो जाता धर्म आत्माऽसवः सुराः ॥ ४६ ॥

---

इदमपि निजरूपत्वसाधकमित्याशयेनाह—तं तथेति ॥ ४२ ॥ भावं भक्तिम् ॥ ४३ ॥

बृंहणं प्रजापूरणयोजनम् । कामोऽभिप्रायः । विभूतयः मम विशेषेण सन्निधानस्थानभूताः । 'विशेषव्यक्तिपात्रत्वाद् ब्रह्माद्यास्तु विभूतयः । तदन्तर्यामिणश्चैव मत्स्याद्या विभवा इति ।' इति वचनात् ॥ ४४–४५ ॥

ब्रह्म पूर्णं तपो मे हृदयं प्रियम् । कुतः ? तपोऽभिमानी रुद्रः मम हृदयाज्जातः तदाश्रित-श्चेत्येवं व्याख्येयम् । विद्या मम तनुः स्वरूपम् । विद्याभिमानिन्युमा तनोर्जाता तदाश्रिता । क्रियाभि-मानी त्विन्द्रो हरेराकृतिः । शृङ्गाराद्याकाराज्जातस्तदाश्रितश्च, क्रतवो यज्ञाः सङ्कल्पा वा तदाश्रिताश्च, अभिमानी च पूर्वोक्त एव । धर्मो धर्मराजः हरेरात्मा मध्यदेहाज्जातः । तदाश्रितश्च । सुराः सु शोभमान एव राः कुल्यान्नं यस्य स सुराः वायुश्चित्तगतः हरेरतिप्रियः, असवो हरेः प्राणाज्जातस्त-दाश्रितश्च[2] । असव इति बहुवचनमप्शब्दवत् । ब्रह्माद्याः सुराश्च हरेरसुशब्दवाच्येभ्यः श्रोत्रादीन्द्रि-येभ्य उत्पन्नाः तदाश्रिताश्चेति द्विरावृत्त्या व्याख्येयम् । 'तपोऽभिमानी रुद्रश्च विष्णोर्हृदयमाश्रितः । विद्यारूपा तथा चोमा विष्णोस्तनुमुपाश्रिता । शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः । अङ्गेषु

---

[1] साक्षात्—क [2] 'प्राणे वायुश्चित्तगतो ब्रह्माऽन्याः खेषु देवताः' इति हृषिकेशतीर्थीयः पाठः । अतः 'प्राणो वायुश्चित्तगतो ब्रह्माद्याः खेषु देवताः इति पाठस्तदनुसारीणि व्याख्यानानि च प्रामादिकानीति गोविन्दाचार्याः

अहमेवेदमासाग्रे नान्यत् किञ्चान्तरं बहिः ।
संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः　　॥ ४७ ॥

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
यदासीत् तत एवाद्यः स्वयम्भूः समभूदजः　　॥ ४८ ॥

---

ऋतवः सर्वे मध्यदेहे च धर्मराट् । प्राणो वायुश्चित्तगतो ब्रह्माद्याः स्तेषु देवताः ' इति वचनादुक्त एवार्थो ग्राह्यः । रुद्रादीनां हरेस्तदङ्गशब्दवाच्यत्वं 'यदाश्रयं यद् भवति तत् तन्नामकमीरितम्' इत्यभिधानात् सिद्धम् ॥ ४६ ॥

अत्राद्वैतवादिनो निर्गुणं वाङ्मनसागोचरं, जगत्कारणं सगुणमिति द्विविधं कल्पयन्ति । तन्मतनिराकरणायाह—**अहमेवेत्यादिना** । सप्तसु प्रथमेति सूत्रात् अहं मम यदिदं स्वरूपं त्वया तपसा दृष्टं तदेवाग्रे सृष्टेः प्राक् लय आस । अन्यद् वाङ्मनसागोचरं नास । 'सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा' इति श्रुतेः । असति प्रलये । कीदृशम् ? **आन्तरं बहिः** । सर्वान्तःस्थितं सर्वस्माद् बहिरपि स्थितम् । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतेः । तपसा दृष्टं प्राकृतं चेदुक्तार्थानुपपत्तिरित्यत उक्तम्—**संज्ञानमात्रमिति** । समित्यनेन ज्ञानस्य स्वरूपाभेदं ध्वनयति । मात्रशब्देन प्रकृतिप्राकृतरूपराहित्यम् अवताररूपाणां च तदात्मत्वं सूचयति । 'सत्यं ज्ञानम्' इति श्रुतेः । अत एवाव्यक्तमतिसूक्ष्मम् । 'तदव्यक्तमाह हि' इति सूत्रात् । हरेः स्वापवचनमपि लोकव्यामोहनायेति भावेनाह—**प्रसुप्तमिवेति** । कृतचक्षुर्निमीलनमात्रं न त्वज्ञानात्मकनिद्रया युतम् । श्रियं विना अवस्थितं (सर्वं) स्वापावस्थानभागित्यर्थः । सर्वं हरौ लीनं चेन्मुख्यतस्तदविशेष एव किं न स्यादित्यत उक्तम्—**विश्वत इति** । विश्वस्माद् भिन्नमिति शेषः । अनेन हरेर्नानावर्णत्वं तथा करचरणाद्यवयवत्त्वं श्रियमन्तरेणावस्थानं ध्वनितम् । तत्कथं युज्यत इतीयमाशङ्का 'नानवर्णो हरिस्त्वेको बहुशीर्षभुजोरुपात् । आसील्लये तदन्यत् तु सूक्ष्मरूपं श्रियं विना । अप्रसुप्तः सुप्त इव च मीलिताक्षो भवेद्धरिः । अन्यत्रानादराच्छ्रीश्च विष्णौ लीनेव कथ्यते । सूक्ष्मत्वेन हरौ स्थानाल्लीनमन्यदपीष्यते' इत्यनेन परिहर्तव्येति । सृष्टौ स्वीकृतनानावर्णं ज्ञानात्मकावयवं यद् रूपं दृष्टं तदेवं प्रलये स्वोदरलीनप्रपञ्चं नित्यप्रबुद्धमपि स्वलीनवदिस्थितश्रीतत्त्वेन (सह) मीलिताक्षम् अपरिच्छिन्नं श्रीहरिरूपमिति भावः[1] ॥ ४७ ॥

लयमुक्त्वा सृष्टिमाह—**मयीति** । मयि मत्सम्बन्धिनाभेः यत् पद्ममासीत् ततः पद्मादेव स्वयम्भूः समभूदित्यन्वयः । कोऽसौ स्वयम्भूरित्यत उक्तम्—**अज इति** । 'अजा विष्णुहरच्छागाः'

---

[1] श्रीहरिरूपमासेति भाव इत्यर्थः ।

स वै यदा महादेवो मम वीर्योपबृंहितः।
मेनेऽकल्पमिवात्मानमुद्यतः सर्गकर्मणि ॥ ४९ ॥

अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम्।
नव विश्वसृजो युष्मान् येनादावसृजद् विभुः ॥ ५० ॥

एषा पञ्चजनस्याङ्ग दुहिता वै प्रजापतेः।
असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥

मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः।
मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥

त्वत्तोऽधस्तात् प्रजाः सर्वा मिथुनीभूय मायया।
मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ ५३ ॥

इत्युक्त्वा मिषतस्तस्य भगवान् विश्वभावनः।
स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥ ५४ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे चतुर्थोऽध्यायः।

---

इष्यतः। कथं निर्णय इष्यत उक्तम्—आद्य इति। जगदादौ भूतः चतुर्मुख एवेत्यर्थः। 'अजः पितामहो ब्रह्मा' इत्यभिधानाच्च। कीदृशे मयि ? अनन्तगुणे असङ्ख्यातज्ञानादिगुणे। गुणतोऽनन्ते प्रत्येकशोऽप्यसङ्ख्याते। अनन्तविग्रहे असङ्ख्यातरूपे। 'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते। अनन्तत्वं तु गुणतस्ते चानन्ता हि सङ्ख्यया। अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च' इति वचनं चात्र मानम् ॥ ४८ ॥

महादेवः देवेभ्यो महानुत्तमः स ब्रह्मा। अकल्पमशक्तम्। स्रष्टुमिति शेषः ॥ ४९ ॥

अथ तदा। मे मया। येन तपसा ॥ ५० ॥

मदीयया मदधीनया मायया लक्ष्मीरूपिण्या। अधस्तात् त्वदधीनाः। बलिं मे मह्यं हरिष्यन्ति दास्यन्ति ॥ ५३ ॥ मिषतः पश्यतः ॥ ५४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धस्य चतुर्थोऽध्यायः ॥ ४ ॥

॥ अथ पञ्चमोऽध्यायः ॥

बादरायणिरुवाच —

तस्यां [1]स पाञ्चजन्यां वै विष्णुमायोपबृंहितः ।
हर्यश्वसंज्ञानयुतं पुत्रानजनयद् विभुः ॥ १ ॥

अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप ।
पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥

तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः ।
सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥ ३ ॥

तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ।
धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥ ४ ॥

तेपुस्ते तप एवोग्रं पित्रादेशेन यन्त्रिताः ।
प्रजाविवृद्धये यत्तान् देवर्षिस्तान् ददर्श ह ॥ ५ ॥

उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः ।
अदृष्ट्वाऽन्तं भुवो यूयं बालिशा बत बालकाः[2] ॥ ६ ॥

---

ज्ञानमन्तरेण केवलकर्मणा परमश्रेयःसाधनत्वं निषिध्यतेऽस्मिन्नध्याये । तत्रोपोद्घातं रचयति— तस्यामिति । पाञ्चजन्यां पञ्चजननाम्नः प्रजापतेः पुत्र्याम् । विष्णुमायया विष्णुमहिम्ना ॥ १ ॥

तत्र प्रतीच्यां सिन्धुसमुद्रयोः सङ्गमोऽस्ति, यत्र सङ्गमे नारायणसरो नाम तीर्थं चास्ति । सुमहान्तो मुनयश्च सिद्धाश्च सुमहन्मुनिसिद्धाः । तैर्निषेवितम् ॥ ३ ॥

तस्य तीर्थजलस्य स्नानाचमनादिना विनिर्धूतमल आशयो येषां ते यथोक्ताः ॥ ४ ॥

यत्तान् सन्नद्धान् ॥ ५ ॥

हे हर्यश्वाः । सर्जनलक्षणकर्मप्रयोजनेन भवितव्यम् ? तत् कथं सेत्स्यति ? न कथमपि । ज्ञानाभावात् । तथात्मनात्मविवेकलक्षणं वा इत्यनेन सूचयति[3] । 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' इति श्रुतेः । इतरेषां दुर्बोधाय हर्यश्वानामौत्सर्गिकज्ञानसद्भावप्रकटनाय च परोक्षवचनेन ज्ञानाभावं दर्शयति — अदृष्ट्वेति । यस्माद् बालका अत एव च बालिशा इत्युपचारमात्रवचनम् ॥ ६ ॥

---

[1] च—ख [2] पालकाः—ख [3] अस्पष्टमिदं वाक्यम् । आत्मानात्मविवेकज्ञानाभावादित्यभिप्रायः स्यात् ।

तथैकपुरुषं राज्यं बिलं चादृष्टनिर्गमम् ।
बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ७ ॥

नदीमुभयतोवाहां पञ्चपञ्चाद्भुतं गृहम् ।
क्वचिद्धंसं चित्रकथं क्षुरान्तं च स्वयं भ्रमिम् ॥ ८ ॥

कथं स्वपितुरादेशमविद्वांसो विपश्चितः ।
अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ९ ॥

श्रीशुक उवाच —

तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया ।
वाचः कूटं च देवर्षेः स्वयं विममृशुर्धिया ॥ १० ॥

भूः क्षेत्रं बीजसंज्ञस्य यदनादिनिबन्धनम् ।
अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ११ ॥

---

अनुरूपमात्मानात्मविवेकलक्षणम्[1] ॥ ९ ॥

औत्पत्तिकमनीषया स्वाभाविकज्ञानसंपन्नया धिया विचारविशुद्धया बुद्ध्या वाचः कूटं वचनसमूहं, गुह्यभाषात्मकत्वेन कूटमिव प्रतीयमानं वा, अल्पबुद्धिभिर्दुर्बोधं वा, स्वयं परोपदेशं विना विममृशुः विचार्यालोच्य[2] निश्चितवन्तः इत्यर्थः । 'मननेच्छा मनीषा स्याज्ज्ञानं बुद्धिर्मतिस्तथा' इत्यभिधानम् । 'कूटं तु कैतवं ज्ञेयं समूहो मेलनं तथा' इति च । औत्पत्तिकमनीषया निरूप्योक्त धिया विममृशु-रिति वा ॥ १० ॥

कथं निश्चिक्युरिति तत्राह—भूः क्षेत्रमिति । भुवोऽन्तमित्यत्र भूशब्देन क्षेत्रं सूक्ष्मशरीरं लिङ्गशब्दवाच्यमुच्यते । कस्य विद्यमानम् ? अत्राह — बीजेति । बीजसंज्ञस्य जीवस्य [3]यच्छरीर-मनादिकालमारभ्य जीवं नितरां बध्नातीति अनादिनिबन्धनम् । अस्मिन् काले प्रारब्धमित्यनियमा-दनादि । अनेन लिङ्गशरीरस्य भूशब्दवाच्यत्वं युक्तम् । भू सत्तायाम् इति धातोः । सत्तायास्तथात्वात्[4] ।

---

[1] विपश्चितः सर्वज्ञस्य पितुरादेशमात्मनोऽनुरूपमविद्वांसोऽजानन्तः, पूर्वोक्तं चैकपुरुषं राज्यमित्याद्यविज्ञायाहो सर्गं करिष्यथेत्यन्वयः ।—चेट्टी [2] ल्यबन्ते इमे पदे समानार्थके भातः ।

[3] मूलस्थयत्पदस्यार्थकथनं शरीरमिति । [4] अनादित्वादिति यावत् ?

एक एवेश्वरस्तुर्यो भगवान् स्वाश्रयः परः ।
तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥
पुमान् नापैति यद् गत्वा बिलं स्वर्गगतो यथा ।
प्रत्यगात्माविद इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥
नानारूपाऽऽत्मनो बुद्धिः स्वैरिणीव गुणान्विता ।
तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥
तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् ।
तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १५ ॥

---

तस्य शरीरस्यान्तं निर्वाणं सर्वात्मना नाशमदृष्ट्वाऽनेन उपायेन नाशो भवतीत्यज्ञात्वा, असत्कर्मभिरात्मानात्मविवेकाजनकैः सर्जनलक्षणैः कर्मभिः किं फलम् ? न किमपीत्यर्थः ॥ ११ ॥

तथैकपुरुषं राज्यमित्यस्य विमृष्टार्थमाह—एक एवेति । तुर्योऽवस्थात्रयातीतः । अभवं न भवः संसार उत्पत्तिर्वा यस्य स तथा तम्, नित्यमुक्तमित्यर्थः । अदृष्ट्वा अविज्ञाय पुरुषस्य पशुहिंसालक्षणैः भगवदर्पणबुद्धिशून्यैः यागादिकर्मभिः किं नित्यं फलं भवेत् ? न स्यादित्यर्थः । पुंसोऽभवं मुक्तिप्रदं वा ॥ १२ ॥

बिलं चादृष्टनिर्गममित्यस्यालोचितार्थमाह — पुमानिति । पुमान् यत्प्रत्यगात्मना सर्वात्मना अनुगतं ब्रह्मस्वरूपं गत्वा नापैति, तदतिशयितबलात्मकत्वाद् बिलशब्दवाच्यं ब्रह्म अविदोऽजानतः पुंस इह जीवलोके नित्यनैमित्तकाद्यसत्कर्मभिः इतरविषयैः । बिलं स्वर्गेति व्यतिरेकदृष्टान्तः । अनेन अदृष्टनिर्गममित्यस्य पुनरावृत्तिशून्योऽर्थ इतरत्रानिष्क्रमणार्थ[1] इति सूचितम् ॥ १३ ॥

बहुरूपामित्यस्य युक्तार्थमाह-- नानारूपेति । आत्मनो जीवस्य या बुद्धिः चिदचिदात्मिका सत्त्वादिगुणैरन्विताऽपरक्ता विकृता वा । अत एव नानारूपा । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतेः । नानाविधसंस्काराधिवासितत्वात् । स्वैरिणी स्वच्छन्दवर्तिनी स्त्रीव । तन्निष्ठां तस्याः बुद्धेश्चेतनायाः निष्ठां भगवत्परतामनिन्द्यात्मिकायाः नाशम्, अगतस्य भगवद्भक्त्यादिसाधनसामर्थ्यमकुर्वतः पुरुषस्य बुद्धिदोषनाशासामर्थ्यैः दानादिलक्षणैः कर्मभिः ॥ १४ ॥

'पुमांसं पुंश्चलीपतिम्' इत्यस्य विवक्षितार्थमाह—तत्सङ्गेति । तस्याः रजस्तमःप्रकृतेर्बुद्धेः

---

[1] पुनरावृत्तिशून्यत्वमर्थ इतरत्रानिष्क्रमणमर्थ इति पाठः ।

सृष्टयप्ययकरीं मायां वेलाकूलान्तवेगिताम् ।
मत्तस्य तदविज्ञानात् किमसत्कर्मभिर्भवेत् ॥ १६ ॥
पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्शनः ।
अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥

---

सङ्गेन पशवर्तिलक्षणेन[1] भ्रंशितं विस्रस्तं नष्टमैश्वर्यं भगवज्ज्ञानलक्षणं शमदमादिलक्षणं वा यस्य स तथा तम् । अत एव संसरन्तं सुखदुःखे भुञ्जानं जीवं [2]तद्गतीः तस्य जीवस्य गतीः स्वर्गनरकादिलक्षणाश्चाबुधस्याजानतः पुंस असद्भिः भगवदनुद्देशेन प्रसक्तैः कर्मभिः तीर्थस्नानादिलक्षणैः दुःखनिवृत्तिः फलं भवेत् किम् ? कुत्सिता शास्त्रलोकनिन्दिता भार्या पुंश्चली यस्य स तथा तस्य या नरकादिगतिः तद्वत् । अनेन पुंश्चलीपतिशब्दार्थ उक्तः ॥ १५ ॥

'नदीमुभयतो वाहाम्' इत्यस्याभिमतार्थमाह—सृष्टीति । [3]वेलाकूलशब्दाभ्यां सृष्टिसंहारौ लक्ष्येते । तयोरन्तयोर्वाहशब्दोपलक्षितवेगयुक्तां स्थितौ शनैः प्रवर्तमानां तथोक्ताम् । क्रमव्युत्क्रमत उभयतोवाहत्वम् । एवंविधामीश्वरमायां (प्रति) मत्तस्य विषयरागेण विस्मृतस्य । अत एव तदविज्ञानात् तद्विषयज्ञानाभावात् । असद्भिः कर्मभिः अश्रद्धया कृततपआदिलक्षणैः मायाविनिवर्तकं फलम् (भवेत् किम् ?) । प्रसिद्धनद्याश्च वृद्धिह्रासाभ्याम् उभयतोवाहत्वं सिन्धुसङ्गमे दृष्टम् । नदीमातृके देशे सस्यादिसंहारौ च ॥ १६ ॥

पञ्चपञ्चत्यस्य विमर्शप्रकारमाह — पञ्चेति । पञ्चविंशतितत्त्वानामद्भुतत्वेन दृश्यत इति [4]अद्भुतदर्शनः गृहस्थानीयः यः पुरुषः तम् [5]अध्यात्ममात्मानमधिकृत्य वर्तमानमिन्द्रियं चाबुधस्याजानतः पुरुषस्य । असत्कर्मभिः 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति स्मृतिविहिताविपर्ययैः योगाभ्यासादिलक्षणैः वायुप्रसादादिफलम् (भवेत् किम् ?) । अनेन पञ्चपञ्चत्यत्र [6]पञ्चकत्रयं प्राह्यमिति सूचितम् ॥ १७ ॥

---

[1] वशवर्तीनलक्षणेनेति यावत् । इका निर्देशे भावार्थलाभात् । [2] तद्गतीः बुद्धिसङ्गस्य गतीः—स

[3] सृष्टिसंहारकारणीभूतां मायाम् । मायानद्या वेलाकूले पूर्वतीरोत्तरतीरे तयोरन्ते मध्ये वेगोऽस्या अस्तीति ताम् । यथा सरित् तीरयोरन्तरा चरति तथा माया भगवद्बन्धकशक्तिमयी सृष्टिसंहारयोरन्तराऽस्ते । पुनःपुनर्जननकेवलीति भावः ।—स. [4] अद्भुतं दर्शयतीति अद्भुतदर्शनः—स. अद्भुतं दर्शनं ज्ञानं यस्मात् सः—वेही

[5] अध्यात्ममात्मानमेतदात्मकं शरीरमधिकृत्य पञ्चविंशतितत्त्वमध्ये वर्तमानं परमात्मानम्—इति स.
अध्यात्मं नियामकत्वेन देहेन्द्रियाद्यधिष्ठातारं तम्—इति वेही ।

[6] किं तत् त्रयमिति न स्पष्टम् । पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च भूतानि पञ्च तन्मात्रा मनोबुद्ध्यहङ्कारमहदव्यक्तानि पञ्चविंशति तत्त्वानि ।

ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् ।
विविक्तपदमज्ञात्वा किमसत्कर्मभिर्भवेत् ॥ १८ ॥

कालचक्रं भ्रमिं तीक्ष्णं सर्वं निष्कर्षयेज्जगत् ।
स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥

शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ।
कथं तदनुरूपाय गुणविश्रम्भ्युपक्रमेत् ॥ २० ॥

इति व्यवसिता राजन् हर्यश्वा एकमेधसः ।
प्रययुस्तं परिक्रम्य पन्थानमनिवर्तकम् ॥ २१ ॥

---

क्वचिद्धंसं चित्रकथमित्यस्यार्थं दर्शयति—ऐश्वरमिति । ईश्वरप्रतिपादकम् । समाध्यदिभाषात्रयेण चित्राः कथाः यस्मिंस्तत् । बन्धमोक्षावनुदर्शयतीति बन्धमोक्षानुदर्शनम् । अत एव हंसम् । विविक्तपदं विविक्तं सर्वतः सारभूतं पद्यते प्राप्नोति अनेन पुरुष इति । हंसो यथा सारं क्षीरमेव गृह्णाति तथेदमिति लुप्तोपमम् । एवंविधं भारतादिशास्त्रमुल्लङ्घ्याज्ञात्वा असत्कर्मभिर्बौद्धादिशास्त्रश्रवणलक्षणैः । ज्ञानलक्षणं फलम् (भवेत् किम् ?) ॥ १८ ॥

'क्षुरान्तं च स्वयं भ्रमिम्' इत्यस्यानुरूपमर्थमाह — कालचक्रमिति । भ्रमिमित्यनूद्य सर्वं जगन्निष्कर्षयदिति व्याख्याति । 'भ्रामयन् सर्वभूतानि' इति स्मृतेः । क्षुरान्तमित्यस्यार्थस्तीक्ष्णमिति । क्षुरान्तः क्षुरधारा तद्वत् तीक्ष्णमित्यर्थः । स्वयमित्यस्यार्थः स्वतन्त्रमिति । एतदर्थैः किं लक्ष्यत इति तदाह— कालचक्रमिति । द्वादशमासादिदलाद्यन्वितत्वाच्चक्रव्यपदेशः । तत्स्वरूपमप्यजानतः पुंसः तत्तत्कालविहितविपर्ययैः । कालजयलक्षणं फलम् (भवेत् किम् ?) ॥ १९ ॥

'कथं स्वपितुरादेशम्' इत्यस्यानुगुणार्थमाह—शास्त्रस्येति । 'मातेव रक्षति पितेव हिते नियुङ्क्ते' इति वचनात् पितेव हितोपदेष्टृत्वात् पितृशब्देन शास्त्रमुपलक्ष्यते । 'प्रातरुत्थायाथ सन्ध्यामुपासीत' इत्यादेः अनुरूपं संसारनिवर्तकं शास्त्रलक्षणं पितुरादेशं यो न वेद स गुणविश्रम्भी गुणविश्वासी पुरुषः तदनुरूपाय शास्त्रविधानानुगुणाय कथं सत्कर्म उपक्रमेत् ? अज्ञानादिति शेषः ॥ २० ॥

इति ऋषेरभिप्रायं व्यवसिताः निश्चितवन्तः एकमेधसः एकबुद्धय अनिवर्तकं पन्थानं संन्यासलक्षणं मार्गम् । संन्यासानन्तरं पुनराश्रमान्तराभावादनिवर्तकं वा । न निवर्तकं यस्य स तथा तम् ॥ २१ ॥

स्वरब्रह्मणि निर्भाते[1] हृषीकेशपदाम्बुजे ।
अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः[2] ॥ २२ ॥

नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ।
अन्वतप्यत कः शोचन् सुप्रजास्त्वं शुचां पदम् ॥ २३ ॥

स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः ।
पुत्रानजनयद् दक्षः शबलाश्वान् सहस्रिणः ॥ २४ ॥

तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ।
नारायणसरो जग्मुर्यत्र सिद्धास्तु पूर्वजाः ॥ २५ ॥

तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ।
जपन्तो ब्रह्म परमं तेपुस्तत्र महत् तपः ॥ २६ ॥

अब्भक्षाः कतिचिन्मासान् कतिचिद् वायुभोजनाः ।
आराधयन् मन्त्रमिममभ्यसन्त इडस्पतिम् ॥ २७ ॥

ओं नमो नारायणाय पुरुषाय महात्मने ।
विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥

इति तानपि राजेन्द्र प्रजासर्गधियो मुनिः ।
उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत् ॥ २९ ॥

---

स्वरब्रह्मणि षड्जादिस्वरलक्षणब्रह्मणि गान्धर्वे नितरां भाते प्रकाशिते । यथा अखण्डं निरन्तरं भवति तथा । निर्भातमिति पाठे चित्तविशेषणम् । निष्णातमित्यर्थः ॥ २२ ॥

को दक्षः सुप्रजास्त्वं शोभनसन्ततिमत्त्वं शुचां शोकानां स्थानमिति सञ्चिन्त्य । सुप्रजास्त्वमग्नि-रसो वो अस्त्विति च्छन्दोऽनुकारिप्रयोगः ॥ २३ ॥

सहस्रं सङ्ख्यैषामस्तीति सहस्रिणः ॥ २४ ॥

अभ्यसन्तः अभ्यस्यन्तः । इडस्पतिम् इलापतिम्[3] ॥ २७ ॥

विशुद्धसत्त्वधिष्ण्याय विशुद्धसत्त्वगुणाश्रयाय निर्दोषकेवलज्ञानस्वरूपाय वा । महाहंसाय सार-ग्राहिश्रेष्ठाय ॥ २८ ॥

---

[1] निर्भातम्—वि [2] अन्वचरन्मुनिः—स [3] इलापतिं वाक्पतिम्, इल्यानां पतिं वा—स

ह्यश्वायणाः संश्रुत्य गदतो निगमं मम ।
अनिवृत्तानुपदवीं भ्रातृणां भ्रातृवत्सलाः ॥ १० ॥

भ्रातृणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ।
स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ११ ॥

एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ।
तेऽपि चान्वगमन्मार्गं भ्रातृणामेव मारिष[2] ॥ १२ ॥

सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ।
नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ १३ ॥

एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः ।
पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ १४ ॥

चुक्रोश नारदायासौ पुत्रशोकविमूर्छितः ।
देवर्षिमुपलभ्याह रुषा प्रस्फुरिताधरः ॥ १५ ॥

दक्ष उवाच —

अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया ।
असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ १६ ॥

---

[1]प्रायणं प्रयाणम् आश्रमप्राप्तिलक्षणम् । पुण्यमेव बन्धुः यस्य स तथा । मरुद्भिर्देवैः ॥ ११ ॥

सध्रीचीनं शोभनम् । प्रतीचीनमभिमुख्येन वर्तमानम् । परस्य परमात्मनः अनुपथमनुगुणं पन्थानम् । पश्चिमाः यामिनीः यामिन्यः अतीतरात्रय इव ॥ १३ ॥

प्रजापतिर्दक्षः ॥ १४ ॥

साधोरिव लिङ्गं जटायज्ञोपवीतशमदमादिलक्षणं यस्य स तथा । तेन त्वया नः साधूनामर्भकाणां भिक्षोः संन्यासिनः मार्गः प्रदर्शित इति यदतोऽसाध्वमङ्गलमकारीत्यन्वयः ॥ १६ ॥

---

[1] प्रायणं मोक्षमुद्दिश्यानुष्ठितं धर्मम् । प्रायणमन्तर्मोक्तरमनिश्चयाधीतेति यदुपत्नीनामित्युक्तेः—स.
[2] मारिष आर्य पुत्र्या समुद्र वा । मारिषमार्ये मारिषे कन्येऽप्यनुभाविति विश्वः—स.

ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ।
विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥

एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ।
पार्षदमध्ये चरसि यशोहानिरपत्रपः[1] ॥ ३८ ॥

ननु भागवता नित्यं भूतानुग्रहकातराः ।
ऋते त्वां सौहृदघ्नं वै वैरङ्करमवैरिणाम्[2] ॥ ३९ ॥

नेत्थं पुंसो विरागः स्यात् त्वया केवलिना विना ।
मन्यसे यद्युपशमं स्नेहपाशनिवर्तनम् ॥ ४० ॥

---

ननु भिक्षुमार्गस्य 'संन्यासेन तनुं त्यजेत्' इत्यादिना विहितत्वात् कथममङ्गलं कृतमित्युच्यत इति तत्राह—ऋणैरिति । 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति श्रुतेः त्रिभिः ऋणैरमुक्तानाम्, अननुष्ठानादिति शेषः । अमीमांसितानि अविचारितानि कर्माणि यैस्तथा तेषां पुत्राणामुभयोर्लोकयोः अवाप्तिहेतोः श्रेयसः विघातो विघ्नः कृत इत्यन्वयः । [3]रोपनिमित्तं हे पापेति सम्बोधनं, न तु तदर्थयुक्तत्वात् ॥ ३७ ॥

एवं विचार्यमाणे सति बालानां कृत्याकृत्यविवेकज्ञानशून्यानां मतिभिद् बुद्धिभेदकृत् । यशसो हानिर्यस्मात् स तथा यशोनाशं कृतवान् या । निरनुक्रोशः निर्गता अनुकम्पा यस्मात् स तथेति ॥ ३८ ॥

एतदेवाह—नन्विति । सौहृदघ्नमित्यस्य विवरणं वैरङ्करमिति । खश्प्रत्ययेन दक्षस्य कोपोद्रेकं दर्शयति । एतदेव विस्फुरिताधर इत्यनेनाप्यसूचि ॥ ३९ ॥

विषयप्रसक्त्या रागोद्रेकसम्भवेन संसारानिवृत्तिः स्यादतो वैराग्याय मया हितमुपादेशीति तत्राह—नेत्थमिति । केवलिना[4] सन्ध्योपसनादिकर्मशून्येन भागवताभिमानिना त्वया विना इत्थं बोधनेन पुंसो विरागो न स्यादित्यन्वयः । ननु विषयस्नेहाद् रागः उपशमात् स्नेहनिवृत्त्या रागनिवृत्तिरिति चेत् तत्राह—मन्यस इति । यद्युपशमं स्नेहनिवर्तकं मन्यसे, तथापि स व्यर्थ इति मन्य इति शेषः ॥ ४० ॥

---

[1] यशोहा निरपत्रप इत्यपि स. सम्मतश्छेदः । [2] वैरकारमवैरिणाम् इत्यपि स. सम्मतः ।
[3] कोप—च [4] केवलिना विलक्षणप्रेक्षेण । केवली ज्ञानभेदे स्यादिति विश्वः—स.

नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् ।
निर्विद्यते स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥

यन्नस्त्वं कर्मबन्धानां साधूनां गृहमेधिनाम् ।
कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥ ४२ ॥

तन्तुकृन्तनयान्नस्त्वमभद्रमचरः पुनः ।
तस्माल्लोकेषु ते मूढ न भवेद् भ्रमतः पदम् ॥ ४३ ॥

श्रीशुक उवाच —

प्रतिजग्राह तद् बाढं नारदः साधुसम्मतः ।
एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥

इति षष्ठस्कन्धे पञ्चमोऽध्यायः ।

---

कुतो व्यर्थ इति तत्राह—नेति । नानुभूयाननुभूय विषयसेवामकृत्वेत्यर्थः । विषयतीक्ष्णतां संसारपातहानपटुताम् । तज्ज्ञानाद् वैराग्यं स्यात् किमिति तत्राह—निर्विद्यते इति । यथा विषयभोगेन तत्तैक्ष्ण्यं ज्ञात्वा स्वयं परोपदेशमन्तरेण तस्माद् विषयग्रामान्निर्विद्यते विरक्तो भवति तथा परैर्भिन्नधीः प्रबोधितबुद्धिः न विरक्तो भवति, अज्ञातविषयतीक्ष्णत्वादिति शेषः ॥ ४१ ॥

गालीवचनमन्तरेण क्रोधफलमाह—यदिति । एवं दुर्मर्षं दुस्सहं विरोधं कृतवानसीति यत् तन्मर्षितं सोढमेवेत्यन्वयः ॥ ४२ ॥

तर्हि किं न मर्षितमिति तत्राह—तन्त्विति । हे मूढ । अस्मदभिमतविरुद्धबोधक । तन्तुकृतां सन्ततिकराणां नः तनयानाम् अभद्रम् ऐहिकसुखानुभवविरोधिकृत्यमचरः पुनः । यस्मात् तस्माल्लोकेषु भ्रमतस्ते पदमेकत्र नियतस्थलं स्थानं न भवेदित्यन्वयः ॥ ४३ ॥

स्वयं शोभनकीर्तिः नारद ईश्वरः प्रतिशप्तुं समर्थोऽपि न शशाप । दक्षशापं तितिक्षेत सहेत हि । यद् एतावान् साधूनां वादः स्वभावलक्षणः ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे पञ्चमोऽध्यायः ।

## ॥ अथ षष्ठोऽध्यायः ॥

श्रीशुक उवाच —

ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा ।
षष्टिं सञ्जनयामास दुहितृः पितृवत्सलाः ॥ १ ॥

ददौ स दश धर्माय कश्यपाय त्रयोदश ।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे
भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्यस्य चापराः ॥ २ ॥

नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ।
यासां प्रसूतिप्रभवैर्लोका आपूरितास्त्रयः ॥ ३ ॥

भानुर्लम्बा ककुब् जामिर्विश्वा साध्या मरुत्वती ।
वसुर्मुहूर्ता सङ्कल्पा धर्मपत्न्यः सुताञ्छृणु ॥ ४ ॥

भानोस्तु वेदऋषभ इन्द्रसेनस्ततो नृप ।
विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥ ५ ॥

---

सदसज्जनतारतम्यज्ञानं च भगवन्माहात्म्यज्ञानोपयोगीत्यभिप्रेत्य दक्षपत्न्यसिक्निप्रसूतिप्रसरं प्रपञ्चयत्यस्मिन्नध्याये ततः प्राचेतस इत्यादिना ॥ १ ॥

कालस्य नयने ज्ञापने[1] युक्ताः योग्याः सप्तविंशतिम्, ददाविति शेषः । अपराः षट्पञ्चाशत्संख्याभ्यः शिष्टाश्चतस्रः कन्यास्तार्क्ष्याय[2], ददाविति शेषः ॥ २ ॥

सापत्यानाम् अपत्यतदपत्यादिभिः सहितानां प्रसूतिप्रभवैः पुत्रपौत्रादिभिः भान्वादीनां सपुत्राणां नामधेयं मे मम, सकाशादिति शेषः ॥ ३ ॥

ततो वेदर्षभात् । ततः इन्द्रसेनात् ॥ ५ ॥

---

[1] कालस्य नयने यापने वा—स.

[2] एवं चतस्रस्तार्क्ष्याय कश्यपाय । तार्क्ष्यः पिता पुत्रश्च । अथ तार्क्ष्यसुतो ज्ञात्वेत्यष्टमे । तार्क्ष्यपुत्रा इवोरगानिति सप्तमे । तार्क्ष्यपुत्रः सुधामित्यन्यत्र । गरुत्मान् गरुडस्तार्क्ष्य इत्यमरोक्तेः कश्यपस्य विपस्य च संज्ञेयम् । कश्यपाय त्रयोदश तार्क्ष्याय चापरेति विभज्योक्तिस्तु विवाहक्रमविवक्षयेति नैकधारया सप्तदशेत्युक्तिरिति—स. । तार्क्षस्येति विजयध्वजपाठः ।

ककुभः सङ्कटश्चासीत् कीकटस्तनयो यतः ।
भुवो दुर्गाणि जामेयाः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥

विश्वेदेवास्तु विश्वायामप्रजांस्तान् प्रचक्षते ।
साध्यो गणऽस्तु साध्यायामर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥

मरुत्वांश्च जयन्तश्च मरुत्वत्यां बभूवतुः ।
जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥ ८ ॥

मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ।
यथाफलं प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥ ९ ॥

सङ्कल्पायाश्च सङ्कल्पः कामः सङ्कल्पजः स्मृतः ।
वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥ १० ॥

द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुर्विभावसुः ।
द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥ ११ ॥

प्राणस्योर्जस्वती भार्या सह आयुः परोजवः ।
ध्रुवस्य भार्या धरणी स्वसूत विविधाः पुरः ॥ १२ ॥

अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ।
अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥

---

यतः सङ्कटात् । जामीपुत्राः जामेयाः । दुर्गाण्यगम्यस्थानाभिमानिनः ॥ ६ ॥

अप्रजान् पुत्ररहितान् । तत्सुतः साध्यगणसुतः ॥ ७ ॥

मौहूर्तिकाः मुहूर्ताभिमानिनः । यथाफलं यथोचितं फलं स्वस्वमुहूर्तजम् ॥ ९ ॥

अभिमतिः अभिमानिदेवता[1] । हर्षादयः हर्षाद्यन्तःकरण[2]देवताः ॥ ११ ॥

सहआयुःप्रभृतयः पुत्राः । पुरः पुराभिमानिदेवताः ॥ १२ ॥

---

[1] अभिमतेरभिमान्याः अभिमन्यमानाभिमानिन्याः हर्षशोकभयाद्योऽन्तःकरणप्रभेदास्तेषां च—स.
[2] हर्षाद्यन्तःकरणधर्मदेवताः—स.

स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ।
दोषस्य शर्वरी पुत्रः शिशुमारो हरेः कला ॥ १४ ॥

वस्तोराङ्गिरसी पुत्रो विश्वकर्मा कृतीपतिः ।
ततो मनुश्चाक्षुषोऽभूद् विश्वेसाध्या मनोः सुताः ॥ १५ ॥

विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ।
पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥

भूतस्य भार्या भूताया रुद्रा एकादश स्मृताः ।
सुरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ १७ ॥

रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ।
रुद्रांश्च पार्षदांश्चान्यान् घोरान् प्रेतविनायकान् ॥ १८ ॥

प्रजापतेराङ्गिरसः स्वधा पत्नी पितॄनथ ।
अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती ॥ १९ ॥

---

स्कन्दश्चाग्निपुत्रः । धात्रीत्वेन कृत्तिकापुत्रः । उपचारमात्रमेतत् । मुख्यतस्तु सदाशिवपुत्रः । ये विशाखादयः ते ततः स्कन्दाज्जाताः । दोषभार्या शर्वरी । तत्पुत्रः शिशुमारः । कोऽसाविति तत्राह —हरेरिति[1] ॥ ११ ॥

वस्तोर्भार्या आङ्गिरसी । तत्पुत्रः विश्वकर्मा कृतीपतिः[2] कृतीनां शिल्पानाम् इः इच्छा तस्य पतिः । शिल्पिनां कुलाचार्य इत्यर्थः । कृत्याः देव्याः पतिरिति वा । ततो विश्वकर्मणः ॥ १५ ॥

अथ पञ्चयामो दिवसाभिमानी आतपाज्जात इति शेषः । येन पञ्चयामेन ॥ १६ ॥

भूतस्य सन्ततिमाह —भूतस्येति । भूतस्य भार्या नाम्ना भूता भार्या[3] एकादशरुद्रानसूत । तस्यान्या सुरूपा भार्या कोटिशो रुद्रानसूत । तथा रुद्राणां पार्षदानसूत, तथा प्रेतविनायकांश्च । प्रधान-रुद्ररूपाणां नामन्याह— रैवत इति ॥ १७–१८ ॥

आङ्गिरसः प्रजापतेः नाम्ना स्वधा पत्नी पितॄनसूत । अथ तस्यैवान्या भार्या (सतीनाम्नी)

---

[1] शिशुमारो हरेः कला साक्षादभिन्नांशः—स.

[2] कृतीति तत्सती । कृतीनां क्रियाणां इः काम इच्छा तस्याः पतिः प्रभुः—स.

[3] एकं भार्यापदमधिकमिति भाति ।

कृशाश्वोऽर्चिषि भार्यायां धूमकेतुमजीजनत् ।
धिषणायां वेदशिरा देवलं च सुतं मनुम् ॥ २० ॥

तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनी इति ।
पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥

विनताऽसूत गरुडं साक्षाद् यज्ञेशवाहनम् ।
सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥

कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत ।
दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ।
पुनः प्रसाद्य तं सोमः कला लेभे क्षयेधिताः ॥ २३ ॥

शृणु नामानि लोकानां मातॄणां शङ्कराणि च ।
अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ॥ २४ ॥

अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ।
मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ॥ २५ ॥

---

अथर्वशिरसं वेदं पुत्रत्वेऽकरोत् ॥ १९ ॥

वेदशिरा इति कृशाश्वस्य नामान्तरम् ॥ २० ॥

पुत्राणां जातिभेदसूचनाय 'यामिनी इति' इति सन्धिकार्याभावः ॥ २१ ॥

अनूरुम् ऊरुरहितमरुणमित्यर्थः ॥ २२ ॥

यक्ष्मग्रहार्दितः क्षयरोगार्तः । कीदृश्यः कलाः । कृष्णपक्षे क्षयाः क्षीणाः शुक्लपक्षे एधिताः वर्धिताः । छन्दोभङ्गभयाद्वा मध्यमः । एध वृद्धौ इति धातोः । अथवा इधि दीप्तौ इति धातोः, निष्ठायां कृतौ लोपे इधिता इति रूपं सिध्यति, तस्य गुणः ॥ २३ ॥

शङ्कराणि सुखकराणि ॥ २४ ॥

अत्रापि मिथो वैलक्षण्यद्योतनाय सन्धिकार्याभावः ॥ २५ ॥

---

यामिनी इति (इति) विना सन्धिं निर्देश उत्तरत्र व्यत्ययस्य समताद्युतिनिमित्ततयेति सूचक इति वेद्यम्—स.

तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः ।
सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ।
ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥ २६ ॥

दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः ।
इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ २७ ॥

अरिष्टायाश्च गन्धर्वाः काष्ठाया द्विशफेतराः ।
सुता दनोरेकषष्टिस्तेषां [1]प्राधानिकं शृणु ॥ २८ ॥

द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः ।
अयोमुखः शंकुशिराः स्वर्भानुः कपिलोऽरुणः ॥ २९ ॥

पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ।
धूम्रकेशो विरूपाक्षो विप्रचित्तिस्तु दुर्जयः ॥ ३० ॥

स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ।
वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ॥ ३१ ॥

[2]वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः ।
उपदानवी हयशिराः पुलोमा कालिका तथा ॥ ३२ ॥

उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ।
पुलोमां कालिकां च द्वे वैश्वानरसुते नृप ॥ ३३ ॥

उपयेमे च भगवान् कश्यपो ब्रह्मचोदितः ।
पौलोमाः कालिकेयाश्च दानवा युद्धशालिनः ॥ ३४ ॥

तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ।
जघान स्वर्गतो राजन् एक इन्द्रप्रियङ्करः ॥ ३५ ॥

---

सूचीकटाहन्यायेन प्रातिलोम्येन सन्ततिमाह—तिमेरिति ॥ २६ ॥
भूरुहाः वृक्षाः । सुरसायाः पुत्राः सौरसाः ॥ २७ ॥
द्विशफेतराः एकशफाः । प्राधानिकं प्रधानविषयसंख्यानम् ॥ २८ ॥
ते तव पितुरभिमन्योः पिताऽर्जुनः ॥ ३५ ॥

---

[1] प्राधानिकान्—ख. [2] कश्यपस्य त्रयोदशपत्नीषु सन्ततिमुक्त्वा कृशाश्वस्य सन्ततिमाह ।

[1]विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ।
[2]राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागतः ॥ ३६ ॥
अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ।
यत्र नारायणो देवः स्वांशेनावतरद्[3] विभुः ॥ ३७ ॥
विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ।
धाता विधाता वरुणो मित्रश्शक्र उरुक्रमः ॥ ३८ ॥
विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम् ।
मिथुनं च महाभाग यमं देवं यमीं तथा ॥ ३९ ॥
सैव भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि[4] ।
छाया शनैश्चरं लेभे सावर्णिं च मनुः ततः ।
कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ४० ॥
अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ।
यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४१ ॥
पूषाऽनपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा ।
योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४२ ॥
त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ।
सन्निवेशस्तया जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४३ ॥

---

भुवि, वर्तमानेति शेषः । नाम्ना वडवा ॥ ४० ॥

विवृतद्विजः प्रकाशितदन्तः । दक्षाय कुपितम्, हरमिति शेषः ॥ ४२ ॥

तया रचनया त्वष्टुः सन्निवेशो नाम सुतो जज्ञे विश्वरूपश्च, अभूदिति शेषः ॥ ४३ ॥

---

[1] कश्यपसुतस्य दानवस्य विप्रचित्तेः सन्ततिरुच्यते ।

[2] शतं चैकमेकोत्तरशतम् । तत्र ज्येष्ठो राहुः । केतुशतं केत्वादिशतम् । शरीरविवक्षयैवमुक्तिः । तत्प्रकारश्चाग्रमे स्थापयिष्यते—ख.

[3] अवतरत्—ख । अवतरत् अवातरत् वामनतया—च,ख.

[4] भुवि वर्तमाना । अथवा भुवि नीरोगतया सत्ताविषये नासत्यौ सुषुवे, भिन्नत्वात् तयोः—ख.

तं वव्रिरे सुरगणा स्वस्त्रीयं द्विषतामपि ।
विमतेन परित्यक्ता गुरुणाऽऽङ्गिरसेन यत् ॥ ४४ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

॥ अथ सप्तमोऽध्यायः ॥

राजोवाच —

यस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ।
एतदाचक्ष्व भगवन् शिष्याणामक्रमं गुरौ ॥ १ ॥

श्रीशुक उवाच —

इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः ।
मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २ ॥
विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ।[1]
सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥

---

तं विश्वरूपम् । स्वस्त्रीयं देवानामपि स्वसा । उभयेषां कश्यपपुत्रत्वेन मिथो भ्रातृत्वात् । देवानां स्वस्त्रीयं स्वसुः पुत्रम्, द्विषतामसुराणामपि स्वस्त्रीयमित्यर्थः । देवैः सहेन्द्रेण विमतेनावज्ञातेनाऽऽङ्गिरसेन गुरुणा बृहस्पतिना परित्यक्ता अभूवन्निति यदतोऽसुरजयार्थं विश्वरूपं वव्रिर इत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धस्य षष्ठोऽध्यायः ।

॥ अथ सप्तमोऽध्यायः ॥

'गुरुद्वारा प्रसादकृदहं तु' इति वचनाद् गुरुप्रसाद एव बलीयान् भक्तिज्ञानादिसमुद्रेकसिद्धये । तदभावः सर्वोऽनर्थपरम्पराहेतुः अतो ज्ञानार्थिना पुरुषेण स्वप्नेऽपि गुरुर्नावमन्तव्यः । किन्तु निरन्तरं सबहुमानं प्रसादसमृद्धये निषेवणीय 'इति एतस्मिन्नध्याये निरूप्यते । तत्र राजा पृच्छति- यस्येति । यस्य कस्य । आत्मनः आचार्येण । शिष्याणां पुत्राणाम् । अक्रममपराधम् ॥ १ ॥

राजप्रश्नं परिहर्तुमुपक्रमते—इन्द्र इति ॥ २ ॥

---

[1] इत्येताः—च

विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ।
निषेव्यमाणो भगवांस्तूयमानश्च भारत ॥ ४ ॥

उपगीयमानो ललितमास्थानाध्यासनाश्रितः ।
पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा ॥ ५ ॥

युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ।
विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥

स यदा परमाचार्यं देवानामात्मनश्च ह ।
नाभ्यनन्दत संप्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥

वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ।
नोच्चचालासनादिन्द्रः पश्यन्नपि समागतम् ॥ ८ ॥

ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः ।
आययौ स्वगृहं तूष्णीं विद्वाच्छ्रीमदविक्रियाम् ॥ ९ ॥

तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः
गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥

अहो बत मयाऽसाधु कृतं वै दभ्रबुद्धिना ।
यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥

को गृध्येत् पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि ।
यथाऽहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥

---

आस्थानं सभा । तत्राध्यासनं सिंहासनमाश्रितः ॥ ५ ॥

पारमेष्ठ्यैः श्रेष्ठैः ॥ ६ ॥ न अभ्यनन्दत सन्तुष्ट्या नापूजयत् ॥ ७ ॥

प्रत्येकशः पूजाहेतव इति द्योतनाय वाचस्पत्यादिविशेषणबाहुल्यम् ॥ ८ ॥

श्रीनिमित्तमदस्य विक्रियां विकारम् ॥ ९ ॥

तर्ह्येव तदानीमेव गुरोर्हेलनम् अवज्ञानम् ॥ १० ॥

सदसीत्यनेनावज्ञानस्य उद्रेकतामाह । दभ्रबुद्धिना अल्पबुद्धिना । कात्कृतः धिक्कृतः ॥ ११ ॥

को गृध्येदिति । गृधु अभिकाङ्क्षायाम् ॥ १२ ॥

ये पारमेष्ठ्यधिषणमधितिष्ठन् न कञ्चन ।
प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥

तेषां कुपथद्रष्टॄणां पततां तमसि ह्यधः ।
ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥ १४ ॥

अथाहममराचार्यमगाधधिषणं द्विजम् ।
प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥

एवं चिन्तयतस्तस्य मघोनो भगवान् गृहात् ।
बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥

गुरोर्नाधिगतः संज्ञां परीक्षन् भगवान् स्वराट् ।
ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥ १७ ॥

तच्छ्रुत्वैवासुराः सर्वे आश्रित्यौशनसं मतम् ।
देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥ १८ ॥

तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नाङ्गोरुबाहवः ।
ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः ॥ १९ ॥

---

राजयोग्यसिंहासनमधिष्ठितो न प्रत्युत्तिष्ठेदिति शास्त्रकारवचनात् कथमासुरं भावं नीत इति चेत् तत्राह — य इति । पारमेष्ठ्यधिषणं सिंहासनस्थानमधितिष्ठन् राजा कञ्चन नोत्तिष्ठेदिति प्रत्युत्थानं न कुर्यादिति ये पण्डितम्मन्याः ब्रूयुः ते परमं[1] धर्मं न विदुरित्यन्वयः ॥ १३ ॥

तादृशानां वाक्ये विश्वासेन [2]प्रवर्तमानस्यानर्थफलहेतुत्वाद् बुद्धिमता[3] न कर्तव्यमित्यभिप्रेत्याह —तेषामिति । अश्मना कृताः प्लवाः नावोऽश्मप्लवाः ॥ १४ ॥

यत एवमनर्थोऽथ तस्मात् अगाधधिषणं गम्भीरबुद्धिम् ॥ १५ ॥

अध्यात्ममायया योगसामर्थ्येन । अदृष्टां गतिमदृश्यलक्षणां स्थितिम् ॥ १६ ॥

संज्ञां स्वरूपविषयं ज्ञानम् । स्वराट् इन्द्रः ॥ १७ ॥

निर्भिन्नान्यङ्गानि शरीराणि ऊरवश्च बाहवश्च येषां ते तथा ॥ १९ ॥

---

[1] 'परम्' इत्यस्य व्याख्यामिदम् । [2] प्रवर्तनस्य इति स्यात् । [3] तथा प्रवर्तनम् इत्युपस्करे स्वरसाऽन्वयः ।

तांस्तथाऽभ्यर्दितान् वीक्ष्य भगवानात्मभूरजः ।
कृपया परया देव उवाच परिसान्त्वयन् ॥ २० ॥

ब्रह्मोवाच —

अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् ।
ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत ॥ २१ ॥

तस्यायमनयस्यासीत् परेभ्यो वः पराभवः ।
प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च [1]यत् सुराः ॥ २२ ॥

मघवन् द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात् ।
सम्प्रत्युपचितान् भूयः काव्यमाराध्य भक्तितः ॥ २३ ॥

आददीरन् निलयनं ममापि भृगुदेवताः ॥ २४ ॥

त्रिविष्टपं किं गणयन्त्यभेद्यं मन्त्रा भृगूणामनुशिक्षितार्थाः ।
न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम् ॥

---

आत्मनः परमात्मनो भवतीति आत्मभूः ॥ २० ॥

व इति षष्ठी तृतीयार्थे युष्माभिरित्यर्थः ॥ २१ ॥

निलयनं युष्मदधिकृतं, स्वर्गमिति शेषः । भृगुरेव देवता येषां ते भृगुदेवताः जनाः, ममापि अभेद्यं निलयनम् आददीरन् दारयन्तीति[2] वा[3] ॥ २४ ॥

अनुशिक्षितः सम्यक् साधितोऽर्थो यैस्ते तथा । भृगूणां मन्त्राः त्रिविष्टपमभेद्यं गणयन्ति किम् ? नव । ब्राह्मणशक्तिरचिन्त्यविभवेत्याह—न विप्रेति । विप्राश्च गोविन्दश्च गावश्च ईश्वराः येषां ते तथा तेषाम् । विप्रभक्तिर्गोविन्दगोभक्त्यविनाभूतेति दर्शनाय सहैवोक्तम् । साऽपि तारतम्योपेता शुभदेत्यतो गवीति ॥ २५ ॥

---

[1] यदयं पराभव इत्यन्वय—चेट्टी ।　[2] आदाय यान्ति इति वा ?

[3] ममापि निलयनं सत्यलोकम् । ईर्ष्यमाणकार्यप्रोत्साहनार्थमेवमाहेति भावः । एवमर्थ एवोत्तरत्र त्रिविष्टपं किं गणयन्तीति वक्ष्यमाणं कैमुत्यमत्यन्तश्लिष्टं भवतीति सुन्दरतरोऽयमर्थः ।—स.

तद् विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम् ।
सभाजितोऽर्थान् स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २६ ॥

श्रीशुक उवाच —

त एवमुदिता राजन् ब्रह्मणा विगतज्वराः ।
ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २७ ॥

देवा ऊचुः —

वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ।
कामः सम्पाद्यतां तात पितॄणां समयोचितः ॥ २८ ॥
पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ।
अपि पुत्रवतां ब्रह्मन् किमुत ब्रह्मचारिणाम् ॥ २९ ॥
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ।
भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः ॥ ३० ॥
दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ।
अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३१ ॥

---

तत् तस्मात् । तपस्वित्वादिगुणाधिको गुणोऽप्यस्तीत्याह—अथेति । आत्मवत्त्वादपरः कल्याणगुणो नास्तीत्यतोऽथेति । नैक एवार्थोऽनेन किन्त्वपेक्षिताशेषार्थोऽप्यस्तीत्यतोऽर्थानिति । नेदानीमुत्तरत्राप्ययमेवालमित्यतो विधास्यत इति । तत्रेतिकर्तव्यतामाह—यदीति । उतोऽप्यर्थः ॥ २६ ॥

ते देवाः ॥ २७ ॥

पितॄणां नः समयोचितः एतत्कालयोग्यः । कम्यत इति कामोऽर्थः ॥ २८ ॥

सतां पुत्राणाम् । ब्रह्मचारिणाम् अपुत्रवताम् । पुत्रा उभयेषामपि[1] शुश्रूषणं कुर्वन्तीत्यर्थः ॥ २९ ॥

पित्रादिशुश्रूषणेन रुद्रादिदेवताशुश्रूषणमपि कृतं स्यात्, तेषां तेषु विशेषसन्निधानादित्याह — आचार्य इति । ब्रह्मणश्चतुर्मुखस्य मूर्तिः सन्निधानस्थानम् । प्रजापतेः रुद्रस्य । 'प्रजापतिः शिवः स्थाणुरुमेशो वृषवाहनः' इत्यभिधानात् । मरुत्पतेरिन्द्रस्य । अतिथिः स्वयं धर्मस्यात्मा मूर्तिः । अभ्यागतः प्राघुणिकः । आत्मनः[2] सर्वभूतानि मूर्तिः । 'एको देवः सर्वभूतेषु गूढः' इति श्रुतेः ॥ ३०–३१ ॥ भू

---

[1] उभयेऽपीति स्यात् पुत्रिणोऽपुत्रिणश्चेत्यर्थे ?

[2] आत्मनः परमात्मनः—च,स ।

तस्मात् पितॄणामार्तानामार्तिं परपराभवाम् ।
तपसाऽपनयन् तात सन्देशं कर्तुमर्हसि ॥ ३२ ॥

वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ।
यथाऽञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३३ ॥

न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ।
छन्दोभ्योन्यत्र न[1] ब्रह्मन् वयो ज्यैष्ठ्यस्य कारणम् ॥ ३४ ॥

ऋषिरुवाच —

अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ।
स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३५ ॥

विश्वरूप उवाच —

विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ।
कथं नु मद्विधो नाथा लोकेशैरभियाचितः ॥
प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३६ ॥

---

स्वोक्तवाक्यस्य कर्तव्यत्वे हेतुमुक्त्वा निगमयन्ति — तस्मादिति । परेभ्यः शत्रुभ्यः प्राप्तपराभवलक्षणामार्तिमपनयन् ॥ ३२ ॥ त्वा त्वाम् ॥ ३३ ॥

नन्वहं युष्मदुपाध्यायश्चेत् कनिष्ठस्य मम पादाभिवन्दनं निन्दितं भवतामिति तत्राह — नेति । अर्थेषु प्रयोजनेषु यविष्ठस्य कनिष्ठस्य 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति', 'सर्वा देवता वेदविदि ब्राह्मणे निवसन्ति' इत्यादिश्रुतेः, वेदाभिज्ञानमेव ज्यैष्ठ्यस्य कारणं न वय इत्याह — छन्दोभ्य इति । अत्र छन्दोभ्य इत्यनेन तदभिज्ञानं लक्ष्यते । वेदाभिज्ञानमन्तरेण ज्यैष्ठ्यकारणं वयो न भवति । तज्ज्ञानमेतत् तवास्ति । तस्मात् त्वदङ्घ्रिवन्दनं न निन्दितम्, धौम्यादौ पाण्डवादीनां दृष्टत्वादित्यर्थः ॥ ३४ ॥

धर्मशीलैः विगर्हितम्[2], पौरोहित्यमिति शेषः । कस्मादिति तत्राह — ब्रह्मेति । ब्रह्मवर्चसः उपव्ययो[3] नाशो यस्मात् तत् तथा । पौरोहित्ये ब्रह्मवर्चः उपगतव्ययं प्राप्तनाशं स्यात् तस्माद् धर्मशीलैर्विगर्हितमिति वा योजना । तर्हि तत्र शक्यमित्युच्यतामिति चेत् तत्राह — कथं न्विति । हे नाथाः

---

[1] नो — च

[2] पौरोहित्यं चार्चकत्वं माठापत्यं तथैव च ।
यः करोति स देवोऽपि श्वानयोनिं समश्नुते ॥ इति कर्मविपाकोक्तेः ।

[3] प्राप्तनाशः — च

अकिञ्चनानां हि धनं शिलोञ्छनं स तेन निर्वर्तितसाधुसत्क्रियः ।
कथं विगर्ह्यं तु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥ ३७ ॥

तथाऽपि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ।
भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३८ ॥

श्रीशुक उवाच —

तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ।
पौरोहित्यं ततश्चक्रे परमेण समाधिना ॥ ३९ ॥

सुरद्विषां श्रियं गुप्तामौशनस्याऽपि विद्यया ।
आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः ॥ ४० ॥

यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ।
तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥ ४१ ॥

---

लोकेशैः अभियाचितो मद्विधो विप्रः कथं नु प्रत्याख्यास्यति । कथमपि न निराकरोतीत्यर्थः । गुर्वाज्ञालङ्घने[1] दोषापत्तेरित्यभिप्रेत्याह—तच्छिष्य इति । परकार्यत्वेन निराकार्यमिति तत्राह—स एवेति ॥ ३६ ॥

एतदेव स्पष्टमाह—अकिञ्चनानामिति । लूनसस्ये केदारे स्वामिना च परित्यक्ते एकैकावशिष्टमञ्जरीग्रहणं शिलम् । तादृशे क्षेत्रे एकैकव्रीहिग्रहणम् उञ्छनम् । शिलं चोञ्छनं यत् तेनैव, न प्रतिग्रहादिना, निर्वर्तिताः साधूनां सत्यः क्रिया अग्निहोत्रलक्षणा यस्य स तथा । एवंविधो विगर्हितं पौरोधसं कथं करोमि । दुर्मतिः दुःखितमतिः विषयाक्रृष्टचित्त इत्यर्थः, येन पौरोहित्येन प्राप्तेन हृष्टो भवति तदिति शेषः ॥ ३७ ॥

गुरुभिः प्रार्थितं कियदिति धिक्कृत्य न करोमीति न वच्मीति । कथं तर्हि निर्णय इति तत्राह—भवतामिति ॥ ३८ ॥

औशनस्या उशनसः शुक्रस्य विद्यमाना औशनसी तया । आच्छिद्य स्वीकृत्य । विष्णुः देवता अस्या इति वैष्णवी तया ॥ ४० ॥

कक्ष्यां कवचलक्षणां रक्षाम् ॥ ४१ ॥

---

[1] गुर्वाज्ञोल्लङ्घने—च, छ

यां प्रविश्यासुराञ्छथत् कक्ष्यां नारायणात्मिकाम् ।
अजैपीद् वृषभस्तात सिंहः क्षुद्रमृगानिव ॥ ४२ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे सप्तमोऽध्यायः ।

॥ अथाष्टमोऽध्यायः ॥

राजोवाच —

यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥

भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ।
यथाऽऽततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥

श्रीशुक उवाच —

वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥

विश्वरूप उवाच —

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्गकरन्यासो [1]मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥

---

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां षष्ठस्कन्धे सप्तमोऽध्यायः ।

॥ अथाष्टमोऽध्यायः ॥

'अकामः सर्वकामो वा मोक्षकामो यजेद्धरिम्' इत्युक्तं प्रपञ्चयत्यनेनाध्यायेन । तत्र राजा अतीताध्याये संक्षिप्य कथितं नारायणकवचनामस्तोत्रं लोकोपकाराय विस्तरतः श्रोतुमिच्छति—ययेति । गुप्तो रक्षितः । रिपुसैनिकान् शत्रुसेनानायकान् ॥ १ ॥

तदित्युत्तरलिङ्गानुसारेण । यथाऽऽततायिनः इतीत्थंभावेन श्रोतुं पुनर्वचनम् । यथा येनेत्थं-भावेन, तमित्थंभावं त्वमाख्याहि इति शेषः ॥ २ ॥

धौतौ प्रक्षालितावङ्घ्री पाणी च यस्य स तथा । धौतेत्यारभ्य ओं विष्णवे नमः इत्यन्तेन ग्रन्थेन तद्वर्मधारणे इत्थंभाव वक्ति । कृतः स्वाङ्गे करयोश्च न्यासो येन स तथा ॥ ४ ॥

---

[1] मन्त्राभ्याम् अष्टाक्षरद्वादशाक्षराभ्याम्—ग.

नारायणमयं वर्म सन्नह्येद् भय आगते ।
दैवभूतात्मकर्मभ्यो नारायणमयः[1] पुमान् ॥ ५ ॥

पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ।
मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ६ ॥

ओं नमो नारायणायेति विपर्ययमथापि वा ।
करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ॥ ७ ॥

प्रणवादियकारान्तमंगुल्यंगुष्ठपर्वसु ।
न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि ॥ ८ ॥

षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ।
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ९ ॥

---

सन्नह्येद् बध्नीयात् । दैवाद् भय अनावृष्टिलक्षणे । भूतेभ्यो भय उन्मादादिलक्षणे । आत्मकर्मणा भये कुष्ठभगन्दरादिलक्षण इत्यर्थः ॥ ५ ॥

[2]आनुपूर्व्यात् संप्रदायक्रमात् ॥ ६ ॥

विपर्ययम् शिरआदिर्वा[3] । करन्यासं संक्षिप्योक्तं विस्तारार्थमाह—करन्यासमिति[4] । 'ओं नमो भगवते वासुदेवाय' इतीयं द्वादशाक्षरविद्या ॥ ७ ॥

न्यसेद्धृदय इत्यादिना षडङ्गान्याह—न्यसेदिति । अनु ओङ्कारन्यासानन्तरम् । प्रत्येकमोङ्कारमनुगतं कृत्वेति वा । ललाटोपरि इति वा ॥ ८ ॥

तुना वर्णदेवतास्मरणं सूचयति । शिखया शिखायां मुकुटप्रदेशे ॥ ९ ॥

---

[1] नारायणमयः भगवान् सर्वोत्तम इति ज्ञानवान् । तदुक्तम्—मयं प्रधानमुद्दिष्टं प्राधान्यं यैर्हरेर्मतम् । भगवन्मयास्ते विज्ञेया ते मुच्यन्ते न चापरे—इति चेट्टी

[2] आनुपूर्व्यात् मन्त्रशास्त्रोक्तक्रममनुसृत्य । आनुपूर्व्येति पाठोऽपि सुगमः—स.

[3] पादादिशिरोऽन्तन्यासः संहारन्यासः । शिरआदिपादान्त उत्पत्तिन्यासः । पादाद्युदरान्तं ततः शिरआदिहृदयान्तं न्यासः स्थितिन्यासः ।

[4] अत्राधिकः पाठः चकोषे — 'अंगुल्यश्चांगुष्ठपर्वाणि च । तेषु प्रणवसंपुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यन्तमंगुलीष्वष्टाक्षराणि न्यस्य परिशिष्टमक्षरचतुष्टयं दक्षिणवामांगुष्ठयोराद्यन्तपर्वसु न्यसेत् ओं ओं ओं ओं नं ओं ओं ओं ओं इत्येवंरूपा ।'

मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः ।
सविसर्गं फडन्तं तु सर्वदिक्षु विनिर्दिशेत् ॥ १० ॥

'ओं विष्णवे नमः'

इत्यात्मानं परं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिरिमं मन्त्रमुदाहरेत् ॥ ११ ॥

ओं॥ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥

जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थले च मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥

---

अस्त्रमसुरनिरासमुद्दिश्य[1] । कुर्यादिति शेषः । मन्त्रमूर्तिः मन्त्रदेवतासन्निधानयुक्तदेह इति । विसर्गेण सहितं फडित्यक्षरावसानं मन्त्रम् । अन्तं रक्षसां नाशकरं फडक्षरं वा । तं मकारं स्वाहा विसर्जनीयसहितं फडक्षरं चेति वा ॥ १० ॥

व्यत्यस्योक्त्या विषणवे नम इत्यन्यथाप्रतीतिनिरासाय प्रतीकं पठति—ओं विष्णवे नम इतीति । अनन्तरं ध्येयदेवताप्रकारं निरूपयति—आत्मानमिति । परमात्मानम् । विप्रतिपत्तिनिरासायोक्तं ध्येयमिति । ऐश्वर्यादिषट्शक्तिभिः । उत्साहप्रभुमन्त्रज्ञानक्रियेच्छाशक्तिभिर्वा । तपो नाम शत्रुसन्तापनशक्तिर्ज्ञानं वा । इमं मन्त्रमिति[1] वक्ष्यमाणमेमिमिति ॥ १२ ॥

हरिर्विदध्यादित्यादिना नारायणाख्यं कवचमुच्यते । अणिमाद्यष्टगुणः सृष्ट्याद्यष्टगुणो वा । व्याप्तगुणो वा, अशूङ् व्याप्तौ इति धातुः । शुभलक्षणं गुणमेव भुंक्ते न त्वशुभलक्षणं दुःखमिति वाऽष्टगुणः । अश भोजन इति धातुः । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' इत्यादेः ॥ १२ ॥

यादांसि जलजन्तव इत्यतो वरुणपाशस्य यादोगणान्तर्भूतत्वेऽपि तद्ग्रहणस्य मरणाविनाभूतत्वेन तत्परिहारार्थं पृथग्ग्रहणम् । मथ्नाति हिंसतीति मत् असुरः । तं स्यति नाशयतीति मत्स्यः । मथि हिंसायाम् । शिरो ममन्थ तरसेति प्रयोगाच्च । इतरस्तु मथित्वा विलोड्य सरतीति मत्स्यः । मन्थ विलोडन इति धातुः । सृ गतौ इत्यस्मात् ड्यप्रत्ययः । माययेच्छया गृहीतवटुवामननाममूर्तिः । विश्वरूपः स्थूलरूपः ॥ १३ ॥

---

[1] अस्त्रमुद्दिश्य अस्त्रत्वेन ध्यात्वा—चेट्टी [1] इतीत्यधिकमिति भाति ।

दुर्गेष्वटव्याजिमखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥

रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजो माम् ॥ १५ ॥

मामुग्रधन्वा [1]अखिलप्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद् गुणेशः कपिलः कर्मबन्धात् ॥

सनत्कुमारोऽवतु कामदेवाद्धयशीर्षो मां पथि देवहेलनात्[2] ।
देवर्षिवर्यः पुरुषान्तरार्चनात् कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥

---

अटवी च आजिश्च मखश्चादिर्येषां तानि तथा तेषु । गर्भाः असुरस्त्रीणामिति शेषः ॥ १४ ॥

अध्वनि मा माम् । स्वदेहेन यज्ञं कल्पयतीति यज्ञकल्पः । यज्ञो विष्णुः तत्समः स एवेत्यज्ञो वा । रामः परशुरामः । विविधप्रवासे भरताग्रजः दाशरथी रामः ॥ १५ ॥

छन्दःसाम्यद्योतनाय उग्रधन्वा अखिलप्रमादादित्युक्तम् । नरनामा विष्णुः[3] । हासादुन्माद-कृतहासात् । अयोगान्नारायणस्मरणाद्युपायवैकल्पात् ॥ १६ ॥

सनत्कुमारो ब्रह्मचारिवपुः ब्रह्मपुत्रसनत्कुमाराविष्टः । 'सनत्कुमारनामा तु ब्रह्मचर्यवपुर्हरिः । सनत्कुमारमपरं ब्रह्मपुत्रं विवेश यः । स मां योगेतरात् कामात् पातु विश्वेश्वरः प्रभुः ' इति वाक्य-मत्र मानम् । कामाद्योग्यान्मद्यादिविषयात् देवयति गमयति विषयानात्मनीति कामदेवः[4] तस्माद् । देवर्षिवर्यः महिदासः पुरुषान्तरार्चनात् विष्णोः परिवारत्वमन्तरेण प्राधान्येनान्यदेवतार्चना-दोषात् । 'महिदासस्तु देवर्षिः पातु मां विष्णुरव्ययः । तदनर्पितकर्मभ्यस्तदस्मरणतस्तथा ' इत्यनेन हर्यनर्पितार्चनालक्षणकर्मणः, तथा तस्य स्मरणपूर्वकानर्चनाच्च । महिदासस्तु देवर्षिः इति प्रमाणवाक्य-द्योतनाय महिदासेति प्रसिद्धनाम मुक्त्वा देवर्षिवर्य इत्यबन्धि । अनेम वैष्णवानामेवात्राधिकारो नान्ये-षाम् । तेषामेव विशेषस्मरणज्ञानपूर्तेरिति सूचितम् । केचित् पुरुषार्चनान्तरादित्यनूद्यान्तरायवाचित्वमन्तर-शब्दस्योचुः । तच्चिन्त्यम् । 'अन्तरः परिधानीये बाह्ये स्वीयेऽन्तरात्मनि' इत्यादौ एवं प्रयोगात्[5] ॥ १७ ॥

---

[1] निखिलप्रमादादिति निषठः पाठः । क्वाचित्को धन्वा अखिलादिति । तत्र विवक्षाभावात् सवर्णदीर्घाभावः—स.

[2] मार्गान्तरवर्तिदेवादिवन्दनमविधाय भावनादिरूपासत्कारात्—स.

[3] नरनामा विष्णुरिति सत्यधर्मतीर्थाश्च । नरो नरान्तरस्थो भगवानिति चेट्टी ।

[4] कामान्योग्यान् मद्यादिविषयान् देवयति गमयत्यात्मनीति कामदेवः—च

[5] एवमप्रयोगादिति स्याद्वा ?

धन्वन्तरिर्भगवान् पात्वपथ्याद् द्वन्द्वाद् भयाद् ऋषभो निर्जितात्मा ।
यज्ञश्च लोकादुत तत्कृतान्नो बलो गणात् क्रोधवशादहीन्द्रः ॥ १८ ॥

द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखण्डगणात् प्रमादात् ।
कल्की कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥

मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गव आत्तवेणुः ।
नारायणः पातु सदाऽऽत्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ २० ॥

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥

श्रीवत्सलक्ष्माऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विष्णुः श्रीमान् भगवान् कालमूर्तिः ॥

चक्रं युगान्तानलतिग्मनेमि भ्रमत् समन्ताद् भगवत्प्रयुक्तम् ।
दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥

---

शरीररोगजनकादपथ्यद्रव्यात् । निर्जितात्मा वशीकृतेन्द्रियग्रामः । तत्कृताद् यज्ञकर्मापादिता-दनित्यफलात् स्वर्गादेः । यज्ञनामा यागप्रवर्तको विष्णुः । बलः बलभद्रः स एवाहीन्द्रः शेषनामा । शेषदेवः सहस्राक्षः सहस्राङ्घ्रिशिरोभुजः ' इत्यादेः । ' बलं शक्तौ बलो रामे बलिष्ठे च बलस्तथा ' इत्यभिधानाद् बलिष्ठोऽहीन्द्र इति वा ॥ १८ ॥

धर्मावनाय धर्मपरिपालनाय । उरु प्रपातु भूयो भूयो रक्षत्वित्यर्थः ॥ १९ ॥

प्रातरारभ्य पञ्चभिः पञ्चभिर्घटिकाभिः अहोरात्रविभागं कृत्वा तेष्वेकैकां मूर्तिं सङ्कल्प्याह— मां केशव इति । गोष्ठेभ्य निर्गत्य यत्रैकत्र गावः संयुज्यन्ते स काल आसङ्गवस्तस्मिन् काले ॥ २० ॥

[1]दोषे रात्रिभोजनकाले । रात्रिसामान्यविवक्षायां दोषाशब्दोऽव्ययवाची[2] स्त्रीलिङ्गो वा । रात्रिविशेषकालविवक्षायां पुंल्लिङ्गः । निशीथात् पूर्वयामोऽर्धरात्र उच्यते । तस्मिन् काले निशीथे पञ्चदशघटिकातुलिते एकः पद्मनाभ एवावतु ॥ २१ ॥

प्रत्यूषे अरुणोदयप्रारम्भे । अनुसन्ध्यं सन्ध्यानिकटे । प्रभाते सूर्योदयासन्नसमये ॥ २२ ॥

युगान्तेऽग्निवत् तिग्मा तीक्ष्णा नेमिर्यस्य तत् तथा । स्वरूपमुक्त्वा संबोधयति—दन्दग्धीति ।

---

[1] दोषे दोषा अस्ति प्रारभ्यत्वेनात्रेति प्रदोषस्तस्मिन्—स.    [2] अव्ययो चेति स्यात् ।

गदेऽशनिस्पर्शनविस्फुलिङ्गे [1]निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि ।
कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥

त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरीन् हृदयानि कम्पयन् ॥

त्वं [2]तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघं नो हर पापचक्षुषाम् ॥ २६ ॥

यं नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥ २७ ॥

सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु सङ्क्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ॥ २८ ॥

---

हे सुदर्शन अरिसैन्यमाशु दन्दग्धि अतिशयेन दह । अनेन 'सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ । अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ' इति मन्त्रोऽर्थत उद्धृतः ॥ २३ ॥

स्पृश उपताप इति धातोः स्पर्शनं तपनम् । अशनिवन्निर्घातवत् स्पर्शनास्तापकरा विस्फुलिङ्गा अग्निकणाः यस्याः सा तथा । अशन्योर्वज्रयोः स्पर्शनेन सङ्घट्टनेन जाता ये विस्फुलिङ्गास्तादृशा विस्फुलिङ्गा यस्याः सा तथेति वा । संबन्धेन अशनिशब्देन मेघवह्निर्लक्ष्यते । तस्य स्पर्शनवद् दुःसहा विस्फुलिङ्गा यस्याः सा इति वा । तस्याः संबुद्धिः । अशनिस्पर्शनविस्फुलिङ्गे हे गदे निष्पिण्ढि नितरां पिष्टं कुरु । निष्पिण्ढीति पाठे पिटि पेषण इत्यस्य रूपम् ॥ २४ ॥

दरेन्द्र शङ्खश्रेष्ठ यातुधानादिदृष्टिवद् घोरदृष्टिर्येषां ते तथा तान् अरीन् विद्रावयेत्यन्वयः । अनेन 'पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय । पाहि मां पापिनं घोरं संसारार्णवपातिनम्' इत्ययं मन्त्रः सूचितः ॥ २५ ॥

मम छिन्धीति तुगागमो विकल्पेनेति वक्तव्यम् । द्विषां चक्षूंषि छादय । नोऽस्माकमघं हरेत्यन्वयः । शतचन्द्रेति चर्मणो नाम ॥ २६ ॥

केतुभ्य इत्यनेन उल्कापाता गृह्यन्ते । केतोर्ग्रहेभ्य इत्यनेन गतार्थत्वात् । अघेभ्यो व्यसनेभ्यः ॥ २७ ॥ श्रेयःप्रतीपकाः श्रेयोविरोधिनः ते चासुराः ॥ २८ ॥

---

[1] निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि—वि [3] घोरसंसारार्णवपातिनम्—च

[2] तिग्मधारासिवरेति संबुद्धी ।

गदेऽशनिस्पर्शनविस्फुलिङ्गे [1]निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि ।
कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥

त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरीन् हृदयानि कम्पयन् ॥

त्वं [2]तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघं नो हर पापचक्षुषाम् ॥ २६ ॥

यं नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥ २७ ॥

सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु सङ्क्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ॥ २८ ॥

---

हे सुदर्शन अरिसैन्यमाशु दन्दहीति अतिशयेन दह । अनेन 'सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ । अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय' इति मन्त्रोऽर्थत उद्धृतः ॥ २३ ॥

स्पृश उपताप इति धातोः स्पर्शनं तपनम् । अशनिवन्निर्घातवत् स्पर्शनास्तापकरा विस्फुलिङ्गा अग्निकणाः यस्याः सा तथा । अशन्योर्वज्रयोः स्पर्शनेन सङ्घट्टनेन जाता ये विस्फुलिङ्गास्तादृशा विस्फुलिङ्गा यस्याः सा तथेति वा । संबन्धेन अशनिशब्देन मेघवह्निर्लक्ष्यते । तस्य स्पर्शनवद् दुःसहा विस्फुलिङ्गा यस्याः सा इति वा । तस्याः संबुद्धिः । अशनिस्पर्शनविस्फुलिङ्गे हे गदे निष्पिण्ढि नितरां पिष्टं कुरु । निष्पिण्ढीति पाठे पिषि पेषण इत्यस्य रूपम् ॥ २४ ॥

दरेन्द्र शङ्खश्रेष्ठ यातुधानादिदृष्टिवद् घोरदृष्टिर्येषां ते तथा तान् अरीन् विद्रावयेत्यन्वयः । अनेन 'पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय । पाहि मां पापिनं [3]घोरं संसारार्णवपातिनम्' इत्ययं मन्त्रः सूचितः ॥ २५ ॥

मम छिन्धीति नुगागमो विकल्पेनेति वक्तव्यम् । द्विषां चक्षूंषि छादय । नोऽस्माकमघं हरेत्यन्वयः । शतचन्द्रेति चर्मणो नाम ॥ २६ ॥

केतुभ्य इत्यनेन उल्कापाता गृह्यन्ते । केतोर्ग्रहेभ्य इत्यनेन गतार्थत्वात् । अघेभ्यो व्यसनेभ्यः ॥ २७ ॥ श्रेयःप्रतीपकाः श्रेयोविरोधिनः ते चासुराः ॥ २८ ॥

---

[1] निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि—वि [3] घोरसंसारार्णवपातिनम्—च
[2] तिग्मधारासिवरेति संबुद्धी ।

तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥

विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान् नारसिंहः ।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥

मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥

एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ॥ ३६ ॥

न कुतश्चिद् भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याघ्यादिभ्यश्च कर्हिचित् ॥ ३७ ॥

इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः ।
योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३८ ॥

तस्योपरि विमानेन गन्धर्वपतिरेकदा ।
ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥

साङ्गनो न्यपतत् सद्यः सविमानो ह्यवाक्शिराः ।
विद्यामिमां धारयतो मृतस्यास्थिविलङ्घनात् ॥ ४० ॥ स्या

---

न केवलमायुधादिष्वेवसन्निहितत्वम्, किन्तु सर्वत्रापीति भावेनाह—सर्वैरिति । 'एक एव परो विष्णुर्भूषाहेतिध्वजेष्वजः । तत्तच्छक्तिस्वरूपेण स्वयमेव व्यवस्थितः । सत्येनानेन मां देवः पातु सर्वेश्वरो हरिः' इत्यतो भूषणादिषु विशेषतः सन्निहितत्वादुच्यत[1] इति ज्ञातव्यम् ॥ ३२-३३ ॥

मूलरूपस्य सर्वगतत्वं नावतारस्येति शङ्कां परिहरन् सर्वगतत्वं यथा सत्यं तेन सत्येन तथा नारसिंहः पात्विति तात्पर्याद् विशिष्याह—विदिक्ष्विति । प्रहापयन्निति स्वार्थे णिच् । परिहरन्नित्यर्थः । स्वतेजसा ग्रस्तानि अभिभूतानि समस्तानि तेजांसि सूर्यादीनि येन स तथा ॥ ३४ ॥

मघवन् धनवन् । दंशितः कवचितः ॥ ३५ ॥ साध्वसात् भयात् ॥ ३६ ॥

कौशिकः कुशिकगोत्रे विद्यमानः । योगधारणया योगाभ्यासेन । मरुधन्वनि निर्जलप्रदेशे ॥ ३८ ॥

द्विजक्षयः द्विजमरणम् ॥ ३९ ॥

---

[1] भूषणाद्याख्या धत्त इत्युच्यते । अथवा भूषणाद्यात्मनोच्यते ?

स वालखिल्यवचनादस्थीन्यादाय विस्मितः ।
प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ४१ ॥

य इदं शृणुयात् काले यो धारयति चादृतः ।
तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४२ ॥

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४३ ॥

इति श्रीमद्भागवते षष्ठस्कन्धेऽष्टमोऽध्यायः ।

॥ अथ नवमोऽध्यायः ॥

श्रीशुक उवाच —

तस्यासन् विश्वरूपस्य शिरांसि त्रीणि भारत ।
सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥

---

प्रास्य निरस्य ॥ ४१ ॥

एतद् धारयमाण इत्यादिना यत् फलमुच्यते तस्य कस्माद् वैलक्षण्यदर्शनमिति चेद् उच्यते । गुरुशिष्ययोर्मिथो योग्यतावैकल्याद्, योग्यत्वेऽपि नासंवत्सरवासिने प्रब्रूयादिति विधेर्गुरुकुलवासापूर्त्या, गुरुप्रसादाभावेन वा, लोकोपकारादिना[1] वा गुरोः प्राप्ता विद्या शिष्यस्य यथोक्तफलदा न स्यात् । 'गुरुशिष्ययोरयोग्यत्वाद् गुरुवृत्तेरपूर्तितः । अप्रसादाद् गुरोर्विद्या न यथोक्तफलप्रदा' इत्युक्तेः । तर्हि गुरूपदेशमन्तरेण यथालिखितपाठादिना प्राप्ता फलदा स्यादिति चेन्न । गुरोः प्राप्तायाः फलप्रदत्वात् । 'विद्याः कर्माणि च सदा गुरोः प्राप्ताः फलप्रदाः । अन्यथा नैव फलदाः' इत्युक्तेः । तस्मात् प्रसन्नगुरुदत्ता यथोक्तफलदा इति मन्तव्यम् । 'प्रसन्नोक्ताः फलप्रदाः' इति वचनात् । अत उक्तफलसाकल्यादृष्ट्या नाश्रद्धेयमिति भावः ॥ ४३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां षष्ठस्कन्धेऽष्टमोऽध्यायः ।

॥ अथ नवमोऽध्यायः ॥

अस्मिन्नन्यतमामरापरिहार्यापत्परिहर्तृत्वमहिमावर्णनेन हरावभिवृद्धनिशितभक्तिकुठारस्य योग्याधिकारिकरगतस्य संसारतरुनिर्मूलनपटुताऽभिप्रेयतेऽस्मिन्नध्याये । तत्रादौ बीजकोपस्वभावो दुःसह इति

---

[1] अस्यार्थो न ज्ञायते । लोकापकारादिनेति पाठः स्याद्वा ?

स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ।
अददाद् यस्य पितरो देवाः [1]संप्रश्रयं नृप ॥ २ ॥

स एव हि ददौ भागं परोक्षमसुरान् प्रति ।
यजमानोऽवहद् भागं मातृस्नेहवशानुगः ॥ ३ ॥

तद् देवहेलनं तस्य धर्मालीकं सुरेश्वरः ।
आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद् रुषा ॥ ४ ॥

सोमपीथं तु यत् तस्य शिर आसीत् कपिञ्जलः ।
कलविङ्कः सुरापीथमन्नादं यत् स तित्तिरिः ॥ ५ ॥

ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः ।
संवत्सरान्ते तदघं भूतानां सविशुद्धये ।
भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥

भूमिस्तुरीयं जग्राह खातपूरवरेण वै ।
ईरणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥

---

प्रकटयितुं विश्वरूपस्य विप्रत्वेऽपि [2]रचनाजनितत्वेन दोषित्वेनासुरपक्षपातं तावदाह—तस्येति । सोमं सुरां पिबतीति सोमपीथं सुरापीथम् ॥ १ ॥

भागं हविर्भागम् । यस्य विश्वरूपस्य ॥ २ ॥

परोक्षमज्ञातवत् । मातुः रचनायाः स्नेहस्य परः ॥ ३ ॥

धर्मालीकं धर्मदोषं धर्मे कपटं वा । अयमात्मानमपि हन्तीति भीतः ॥ ४ ॥

यदपि यद्यपि इन्द्रो ब्रह्महत्यादोषनिवारणे ईश्वरः समर्थः, तथाप्यञ्जलिना ब्रह्महत्यां जग्राहेत्यन्वयः । भूतानांसाविशुद्धये लोकापवादपरिहाराय भूतहिंसापापशोधनायेति वा । हरिरिन्द्रः, तद्गतो विष्णुर्वा[3] ॥ ६ ॥

खातस्य स्वत एव पूर्तिः स्यादिति खातपूरवरस्तेन हरिदत्तेन ईरणम् उषरं[4] लवणोपरक्तरस

---

[1] सप्रश्रयम्—क [2] रोचनेति स्यात् । त्वष्टुर्दैत्यानुजा भार्या रोचना नाम कन्यका (७-४१) । अथवा रचनेति विजयध्वजतीर्थसम्मतः पाठः स्यात् ।

[3] संवत्सरं तथैव स्थित्वा संवत्सरान्ते भूताक्रोशभीतः सन् भूतानांसाविशुद्धये लोकापवादपरिहाराय हरिरिन्द्रो भूम्यादिभ्यस्तदघं चतुर्धा व्यभजत् विभज्य ददौ—चेटी । [4] ईषरं—छ

तुरीयं छेदरोहेण वरेण जगृहुर्द्रुमाः ।
तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥
शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ।
रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते ॥ ९ ॥
द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ।
तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरिकिल्बिषम् ॥ १० ॥
हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे ।
इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् ॥ ११ ॥
अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ।
कृतान्त इव लोकानां युगान्तसमये यथा ॥ १२ ॥
विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने ।
दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवाससम् ।
तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १३ ॥

---

इत्यर्थः[1] ॥ ७ ॥ छेदरोहः पुनर्वर्धनं, तेन वरेण ॥ ८ ॥

शश्वत्कामेन निरन्तरविषयसेवाभिलापलक्षणेन वरेण । रजोरूपेण रागरूपेण[2] ॥ ९ ॥

द्रव्याणां पञ्चानां भूतानां मध्ये स्वभूयस्त्वलक्षणेन वरेण । 'तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः' इत्युक्तेः ॥ १० ॥

इन्द्रशत्रव इत्यादिना 'त्वष्टा हतपुत्रोऽपीन्द्रं सोममाहरत्' इत्यादिवेदवाक्यं सूचयति । इन्द्रः शत्रुर्यस्य वृत्रस्य स इन्द्रशत्रुः इन्द्र एव, तस्य सम्बुद्धिः इन्द्रशत्रो इति । अनेन यजमानस्यानभिप्रेतोर्थोऽपि सूच्यत इति ज्ञातव्यम् ॥ ११ ॥

अन्वाहार्यपचनाद् दक्षिणाग्नेः । लोकानां क्षयाय ॥ १२ ॥

सन्ध्याकालाभ्रमालावत् कपिशं वासो यस्य स तथा तम् । तप्तताम्रवत् शिखाश्मश्रूणि यस्य स तथा तम् ॥ १३ ॥

---

[1] इरिणम् ऊषरं लवणोपस्करस इत्यर्थः । अत एवोषरेऽध्ययनादि निषिध्यते—चेट्टी

[2] शश्वत्कामवरेण गर्भसन्दर्भानन्तरमपि सुरतरतिनिश्चितात्मना । पूर्वं च चार्वङ्गीणामर्वाग्विवर्द्धवेदानीं देवेन्द्रदत्तवरेणेत्थंभावः । रजोरूपेण । रजः स्यादार्तवे गुण इति विश्वः—स.

देदीप्यमानत्रिशिखे शूल आरोप्य रोदसी ।
नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम् ॥ १४ ॥

दरीगम्भीरवक्त्रेण पिबन्तं च नभस्तलम् ।
लिहन्तं जिह्वयर्क्षाणि ग्रसन्तं भुवनत्रयम् ॥ १५ ॥

महता रौद्रदंष्ट्रेण जृम्भयन्तं मुहुर्मुहुः ।
वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १६ ॥

येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ।
स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १७ ॥

तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ।
स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत् तानि कृत्स्नशः ॥ १८ ॥

ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः ।
प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥ १९ ॥

देवा ऊचुः —

वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः ।
हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः ॥ २० ॥

---

तिस्रः शिखाः शिरांसि यस्य तत् तथा तस्मिन् ॥ १४ ॥

दरीगम्भीरवक्त्रेण गुहावदगाधमुखेन ॥ १५ ॥

रौद्ररूपे दंष्ट्रे यस्य तत् तथा, तेन मुखेन, जृम्भयन्तं व्याददानम् ॥ १६ ॥

निरुक्तिपूर्वकं नाम निर्दिशति—येनेति । त्वाष्ट्रलक्षणा मूर्तिर्यस्य तत् तथा तेन तमसा आवृता इति येन ततः सोऽसुरो वृत्र इति ख्यातः । 'वृत्रं जघन्वाँ अप तद् ववार' इति श्रुतेः । 'दैत्यभेदे चान्धकारे वृत्रशब्दः प्रयुज्यते' इत्यभिधानाच्च । पातीति पः पालः परमात्मा धर्मो वा, तस्मादपगतः पापः । एतदेव सूचयति—परमदारुण इति ॥ १७ ॥

श्रीनारायणानुग्रहमन्तरेण वृत्रजयो दुस्साधन इति कृत्वा देवानां हरिशरणप्रकारं वक्ति—तत इति । प्रत्यञ्चं प्रत्यगात्मानम् । आदिपुरुषं सृष्टेरादौ भक्तानुग्रहाय गृहीतपुरुषरूपम् ॥ १९ ॥

वाय्वाद्यभिमानिनो ब्रह्मादयो ये त्रिलोकाः ते वयं यस्मै बलिं हराम, त्रिलोकीबहिष्ठं लक्ष्मीतत्त्वं तदनियतं स्वतन्त्रमस्तीति शङ्का मा भूदित्याह—अन्तक इति । असावन्तकः मूलप्रकृतिर्दुर्गादिनामभि-

अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातिपिपर्ति सिन्धुम् ॥ २१ ॥
यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथाऽऽबध्य ततार दुर्गम् ।
स एव नस्त्वाष्ट्रभयाद् दुरन्तात् त्राता श्रितान् वारिचरोऽपि नूनम् ॥
पुरा स्वयम्भूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले ।
एकोऽरविन्दात् पतितस्ततार तस्माद् भयाद् येन स नोऽस्तु पारः ॥

---

भिन्ना यस्मान्महान्तकाद्धरेर्बिभेति भीतेव तद्वशे वर्तते यतस्ततः स हरिर्नः अस्माकमरणं शरणमस्त्विव- त्यन्वयः । ननु ब्रह्मादयो वयं यस्मै बलिं हराम यस्माच्च असावन्तकोऽपि बिभेति ततस्तस्मात् परमेश्व- राद्रणं क्षेमो भवत्विति प्रतीतार्थः कस्मादपलप्यत इति चेन्न । 'कालोऽन्तकः प्रधानं च मृत्युरव्यक्त- मित्यपि । उच्यते प्रकृतिः सूक्ष्मा श्रीर्भूर्दुर्गेति नामभिः । सैव ब्रह्मादिभयदा विष्णोस्तु वशवर्तिनी । अभयाऽपि बिभेतीव तद्वशत्वादुदीर्यते' इति स्मृतिविरोधात् । वायुश्च अम्बरं च अग्निश्च आपश्च क्षितिश्चेति वाय्वम्बराग्न्यप्क्षितयः ॥ २० ॥

एवं स्थिते शिवाद्यन्यतमस्य शरणमिच्छन् बालिश इत्याह—**अविस्मितमिति** । यो ब्रह्मा- द्युपात्तपूजस्तम् । स्वेनैव लाभेन स्वरूपानन्दानुभवेनैव परिपूर्णकामम् । अत एवाविस्मितं कुतूहलबुद्धि- रहितम् । सममेकप्रकारं प्रशान्तं समुद्रवत् स्तिमितं (हरिं) विना योऽपरं रुद्राद्यन्यतममुपसर्पति श्वलांगूलेन तरीस्थानेन सिन्धुं समुद्रमतिपिपर्ति पारमतिक्रामति । तदुचितमित्याह— **हीति** । बालिशो हि यस्मात् तस्मादुचितमित्यर्थः ॥ २१ ॥

ननु यस्य कस्यचिद्धरिशरणमुपगतस्यापदर्णवसन्तरणं दृष्टपूर्वं चेत् तमन्तरेणान्यं शरणं गच्छन् बालिशत्वेन श्वलांगूलेनापारमकूपारं तितीर्षतीति परिहासः[1] स्यात्, तदेव कथमिति तत्राह – **यस्येति** । 'मनुर्यस्य[2] हरेरुरुणि शृङ्गे जगतीं महीमयीं स्वनावं स्वस्य मनोरथेन क्लृप्तां तरीं यथावद्[3] दृढमाबध्य दुर्गमन्योपायेन तर्तुमशक्यं प्रलयार्णवलक्षणं क्लेशं ततार । नूनमिदानीमपि स वारिचरो मत्स्यावतारो हरिरेवाश्रितान् नित्यसेवारतान् नो दुरन्ताद् त्वाष्ट्रभयात् त्राताऽस्त्वित्यन्वयः । यथा ततार तथा तरणायाश्रितानिति वा ॥ २२ ॥

इतोऽपि हरिप्रसादादृते एतद्भयतरणं दुःसाधनमिति भावेन स्तुवन्तीत्याह —**पुरेति** । पुरा आदिसृष्टौ संयमाम्भसि प्रलयोदके स्थितादरविन्दात् प्रकृत्यात्मनः पद्मात् पतितः स्वयम्भूर्भयं ततार स

---

[1] परिहासविषय इत्यर्थः । [2] मनुश्चाक्षुषः—ज [3] यथा यथावत्—ज,छ

य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम् ।
वयं च यस्यापि पुरः समेताः पश्याम लिङ्गं पृथगीशमानिनः ॥ २४ ॥

---

हरिर्नस्त्वाष्ट्रभयार्णवस्य पारः पारप्रदर्शकोऽस्त्वित्यन्वयः । तत्रत्यो वायुरपि प्रकृत्यात्मा । अन्यथा नेदृशं बलमन्यस्य स्यादित्यतस्तल्लयजलं विशिनष्टि–उदीर्णेति । उदीर्णेन वातेन प्रकृत्यात्मना वायुनोन्नमितानामूर्मीणां रवैः कराले भयङ्करे । पद्मादीनां प्रकृत्यात्मत्वं कस्माद् विशिष्योच्यत इति शङ्का मा भूत् । 'यत्र वायूदपद्मादिरूपेण प्रकृतिः स्थिता । एकस्तत्र बिभेद् ब्रह्मा विचार्य भयमत्यगात् । अन्तर्गतो हरिस्तस्य ध्यातो भयमपानुदत्' इत्युक्तेः । भयनिमित्तमाह – एक इति । एकाकित्वात् द्वितीयवस्तुनोऽनुत्पन्नत्वात् । 'सोऽबिभेत् स द्वितीयमैच्छत्' इति श्रुतेः । ननु किमर्थं ब्रह्मणा भयमदर्शीत्यत उक्तम्—अपीति । स्वसृज्यजनानां भयादिस्वभावसंभावनार्थम् । 'जनिष्यतां जनानां तु स्वभावानां प्रसिद्धये' इत्युक्तेः । 'अपि संभावने' इति च । संभावनामन्तरेण स्वाभाविकं किं न स्यादित्यस्यापीदमुत्तरम्—अपीति । अज्ञानाद्धि भयमुत्पद्यते ब्रह्मणस्तु तन्नास्ति । 'ज्ञानादिगुणपूर्णस्य ब्रह्मणोऽपि' इत्युक्तेः । तर्हि कियन्तं कालमनुवर्तत इत्यस्यापीदमुत्तरम् । पूर्णज्ञानस्य चिरकालीनं भयादिकं गर्हितम् । 'क्षणार्धगाः । भयादिका भवन्तीव कथं तस्मिन् स्थिरालयाः' इत्युक्तेः । स्वसृज्यजनभयस्वभावप्रदर्शनमन्तरेणान्यत् किं प्रयोजनमित्यस्यापीदमेवोत्तरम्—अपीति । भयप्रदर्शनेन भगवत्प्रीतिलक्षणमन्यदपि विद्यत इत्यर्थः । 'भगवत्प्रीतये नित्यं ब्रह्मणो ये भयादयः । न वृथा तस्य भावः स्यात् कश्चित् तेऽपि क्षणार्धगाः' इत्युक्तेः । भयादिकमपि किमेकवारं बहुवारमुतेत्यस्यापीदमुत्तरम् । नैकवारं किन्तु बहुवारमस्तीत्यर्थः । 'अज्ञानं तु चतुर्वारं द्विवारं भयमेव च । शोकोऽपि तावन्नान्यत्र कदाचित् ब्रह्मणो भवेत्' इत्युक्तेः । इदमपि हरिप्रीतिजनकत्वेनोन्नतिकारणम् । 'तत्रापि भगवत्प्रीत्या उन्नत्यै वाऽस्य तद् भवेत्' इत्युक्तेः ॥ २३ ॥

किञ्चास्माकं स्रष्टृत्वेन[1] संबन्धत्वादपि[2] निजस्वरूपं न बुद्ध्यामहे किन्तु लक्षणमेव पश्यामः । अतो वयं तमेव शरणं याम इत्याहुः—य एक इति । एकः केवलः ईशः ऐश्वर्यादिगुणपूर्णः यो निजमायया स्वाधीनया प्रकृत्या नः ससर्ज, येन वयं प्रेरिताः विश्वमनुसृजाम, यस्य पुरोऽग्रतः स्थिताः समेताः सङ्गता अपि वयं लिङ्गं लक्षणमेव पश्याम न तु स्वरूपम् । तत्स्रष्टृत्वेन[3] तदनुगृहीतकर्तृत्वेन वाऽचिन्त्यवैभवमेव लक्षणं बुद्ध्यामहे, न सच्चिदानन्दादिस्वरूपम् । अदर्शने कारणमाह—पृथगिति । पृथक् पृथगीशाभिमानित्वात् । अयं च कादाचित्क एव न तु सनातनः[4] । तदुक्तम्

---

[1] स्रष्टृत्वेन पितृत्वेन—छ । स्रष्टृत्वेन पातृत्वेन—ज   [2] संबन्धित्वेपीति स्वरसम् ।
[3] तत्स्रष्टृत्वेनेति यावत् ।   [4] सदातनः—ज

योनः सपत्नैर्भृशमर्द्यमानान् देवर्षितिर्यङ्नृषु नित्य एव ।
कृतावतारस्तनुभिः स्वमायया कृत्वाऽऽत्मसात् पाति युगे युगे च ॥
तमेव देवा वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमाद्यम् ।
व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥ २६ ॥

श्रीशुक उवाच —

इति तेषां महाराज सुराणामुपतिष्ठताम् ।
प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः ॥ २७ ॥
आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ।
पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ॥ २८ ॥

---

'कदाचिदभिमानस्तु देवानामपि सन्निव । प्रायः कालेषु नास्त्येव तारतम्येन सोऽपि तु' इति । अनेन पृथगित्यनेनाभिमानस्य तारतम्यं ध्वनयति । हे ईश अभिमानिनो वयं पृथक् तारतम्योपेता इति वाऽर्थः संपद्यते ॥ २४ ॥

करचरणादिदेहवत्त्वेऽपि देवदत्तवदनित्यदेहो नास्ति । अतः स्वाभिमतसिद्ध्यै संप्रार्थनीय इति भावेनाहुः—**यो न** इति । तनुभिर्देवर्ष्यादिषु कृतावतारोऽपि नित्य एव निर्विकार एव न तु योनिकृतदुःखादिमान् । न केवलमनुयुगं रक्षति हरिः किन्तु अन्यदापीत्यर्थे चशब्दः ॥ २५ ॥

यत्तच्छब्दैरेवोक्तावशिष्टगुणैर्विशेष्य तं शरणं प्रार्थयन्ते— **तमेवेति** । अन्ययोगव्यवच्छेदार्थ एव-शब्दः । देवा इत्यनेन देवानां शरणं हरिरेव नान्य इत्येवशब्दार्थो विवृतः । वयमित्यनेन हरेः स्वेषां च मिथो भेदाभिमानं ध्वनयति । न केवलमिष्टदेवतात्वेन शरणं यामः । अपि तु सर्वोत्तमत्वादिगुण-विशिष्टत्वाच्चेति भावेनाह—**परं प्रधानमिति** । प्रकृतिः किम् ? नेत्याह—**पुरुषमिति** । जीवः किम् ? नेत्याह—**विश्वमिति** । न प्रपञ्च इत्याह—**आद्यमिति** । प्रपञ्चस्यादिभूतम् । 'वासुदेवो वा इदमग्र आसीत्' इति श्रुतेः । नृशंसस्वभावश्चेत् कथमयमिष्टः स्यात् ? अत्राह—**शरण्यमिति** । शरणप्राप्यत्वान्नृशंसो न भवतीत्यर्थः । नास्मिन्नस्मासु विप्रतिपत्तिरित्याह—**सर्वे इति** । शरणं प्राप्तावपि उदासीनो न भवति किन्तु वदान्यवदभीष्टं ददातीत्याहुः—**स्वानामिति** ॥ २६ ॥

स्तुतिफलमाह—**इतीति** ॥ २८ ॥

प्रत्यक्षीभूतं तं भगवन्तं संदृश्य देवाः किं चक्रुरिति तत्राह- **आत्मतुल्यैरिति** । अनेन दर्शनावस्थायां किंगुणविशिष्ट इति पर्यहारि । आत्मतुल्यैः आत्मनो भूतैः अत एव आत्मतुल्यैः

दृष्ट्वा तममराः सर्वे ईक्षणाह्लादविक्लवाः ।
दण्डवत् पतिता भूमौ शनैरुत्थाय तुष्टुवुः ॥ २९ ॥

देवा ऊचुः —

नमस्ते यज्ञवीर्याय वयसे उत ते नमः ।
नमस्ते अस्तु चक्राय नमोऽस्तु पुरुहूतये ॥ ३० ॥

---

मूलभूतस्य हरेः सदृशैः सामर्थ्यादिगुणैरनूनैःषोडशभिर्वासुदेवादिदामोदरान्तैः[1] पर्युपासितं तेषां मध्यस्थाकृतिरूपेण स्थितम् । मूलरूपस्याप्राकृतत्वात् प्रादुर्भावानां शुक्रशोणितसंपर्केण जातत्वात् कथमन्योन्यतुल्यत्वमिति तत्राह–विनेति । श्रीवत्सकौस्तुभौ विना प्रकृतिपुरुषाभ्यां विना प्रकृतिपुरुषातीतत्वेन तदनिर्मितशरीरैरित्यर्थः । अनेन सप्तदशरूपाण्यपि गुणक्रियादिना विशेषरहितानीत्युक्तं भवति । श्रीवत्सकौस्तुभरहितैरात्मतुल्यैः षोडशभिः पार्षदमुख्यैरुपासितमित्यङ्गीकारस्तु[2] 'श्रीवत्सः प्रकृतिर्ज्ञेया ब्रह्माख्यः कौस्तुभः पुमान् । तदतीतैः षोडशभिः स्वरूपैरप्युपास्यते' इति प्रमाणविरोधादप्रामाणिकः । तेषां तद्रूपत्वादन्यलक्षणतुल्यं चाप्रामाणिकम् । अतः प्रकृतिपुरुषानधीनत्वेनान्योन्यतुल्यत्वं वासुदेवादीनामेव । तदुक्तम्— 'अपुंप्रकृत्यधीनत्वाद् वासुदेवादिका हरेः । तुल्याश्च केशवाद्याश्च न च भिन्नाः कथञ्चन' इति । अनेन मूलरूपस्यावताराणां मिथो भेदराहित्यमुक्तमिति ज्ञातव्यम् । हरेः प्रकृतिपुरुषराहित्यं च तदतीतत्वं तदवशत्वं च न कादाचित्कं किन्तु सनातनम् । 'श्रीवत्सकौस्तुभाभ्यां तु विनाभावं प्रदर्शयेत्[3] । पुंप्रकृत्यात्मकाभ्यां स धत्ते नित्यं जनार्दनः' इति वाक्यात् । प्रकृतिपुरुषराहित्यं च तदतीतत्वं तदवशत्वं च । तदुक्तम्— 'यदस्याभ्यामतीतत्वं यद् वशो नानयोर्हरिः' इति । 'श्रीवत्सकौस्तुभाभ्यां तु विनाभावः स एव च' इति च । इयं चोपासिका भक्तानुकम्पित्वेन[4] हरेः परं क्रीडैव । 'आत्मैव सप्तदशधा स्वयं भूत्वा जनार्दनः । मध्यस्थाकृतिरूपेण क्रीडते पुरुषोत्तमः' इत्युक्तेः । '[5]संवीतश्चतुरात्मभिः स्वसदृशैः श्रीकेशवाद्यैरतश्चक्राद्यैरितरैरधीश्वरमुखैर्वज्रादिभिस्तत्परम् । स्वं[6] सेव्यं स्वयमन्तराम्बुजमहापीठे विराजन् हरिर्भूत्यै श्रीपुरुषोत्तमो भवतु वः श्रीवल्लभः सन्ततम्' इति तन्त्रान्तरोक्तमत्रानुसन्धेयम् ॥ २८ ॥ पूर्वं हरेः प्रत्यक्षायाधुना स्वाभिप्रेतार्थसिध्द्यर्थं स्तुतिरिति विशेषः ॥ २९ ॥

स्तुतेः प्रतीकं गृह्णाति -- नमस्त इति । यज्ञस्य वीर्यं रेतः, स्रष्ट्रित्यर्थः, तस्मै । यज्ञो वीर्यं यस्य स तथा, अभिव्यक्ताय[7] इति शेषः, तस्मै । हे यज्ञ, वीरेषु स्थित्वा वीरत्वप्रदायेति वा । उत किन्तु[8]

---

[1] वासुदेवादिचतुर्मूर्तयः केशवादिदामोदरान्तद्वादशमूर्तयश्चेत्याहृत्य षोडश ।
[2] श्रीधरीयव्याख्यानमिदम् । [3] प्रदर्शयन्—ह [4] चोपासकभक्तानुकम्पित्वेनेति चारु ।
[5] आवीतः—च [6] संसेव्यम्—च [7] अभिव्यक्ताय—च [8] किञ्चेति चारु

यत् ते गतीनां तिसृणामीशितुः परमं पदम् ।
नार्वाचीनो विसर्गस्य धातुर्वेदितुमर्हति　　॥ ३१ ॥

'ओं नमस्ते भगवन् नारायण वासुदेवादिपुरुष महानुभाव
परममङ्गल परमकल्याण परमकारुणिक परमहंसपरिव्राजकैः परमे·

---

वयसे बन्धकशक्त्या जीवानां संसारे बन्धकाय । वय बन्धन इति धातोः । 'वयः सर्वस्य वयनाद् भगवान् पुरुषोत्तमः' इति वचनाद् वयश्शब्दोऽत्र[2] बन्धवचनः । 'मा तन्तुश्छेदि वयतो धियं मे मात्रा शार्ययसः पुरा क्रतोः' इति श्रुतेश्च । अतः 'वयो विहङ्गो विहगो विहङ्गमः' इत्यभिधानेऽपि प्रकृतानुपयुक्तत्वान्न पक्ष्यत्र ग्राह्यः । श्रुतेरयमर्थः—दैवे धियं वयतो बध्नतो मे तन्तुः सन्ततिर्मा छेदि उत्सन्नो मा भूत् । क्रतोः पुरा ज्ञानोत्पत्तेः पूर्वमयसः कर्मणः मात्रा मानं परिमाणं मा शारि । शॄ हिंसायात् इति धातोः फलदानेन नष्टं मा भूत् । 'कर्मणा ज्ञानमातनोति' इति श्रुतेः ज्ञानमनुत्पाद्य न नश्यत्वित्यर्थः । स्वकृतं बन्धनं स्वयमेव हन्तुं शक्तो नान्य इति ज्ञापनाय सन्धिकार्याभावः[4] । चक्राय पुनः(पुनः) सृष्ट्यादिकर्त्रे । करोतेर्यङ्लुगन्तं शब्दरूपम् । सर्वहन्त्रे चरतेर्भक्षणार्थे[3] रूपं वा । विपत्परिहर्तृसुदर्शनाख्यावताराय वा । अत्राप्यनन्यसाध्यकरणशक्त्यादिमत्त्वप्रदर्शनाय सन्ध्यभावः । पुरवो बहवो हूतयो नामानि यस्य स तथा तस्मै । 'नामानि सर्वाणि यमाविशन्ति' इति श्रुतेः । 'इन्द्रायाहि चित्रभानो' इत्यादिबहुवेदैर्हूतिर्यस्य स तथा तस्मै वा । 'शुचिः शुचिव्रतः शुद्धः पुरुहुः शुद्धिरुच्यते' इत्यभिधानात् पुरुहुः शुद्धा ऊतिर्यस्य स तथा तस्मै वा ॥ ३० ॥

ईशितुस्ते तव यत् तिसृणां गतीनां देवलोकपितृलोकनिरयसंज्ञानां सकाशात् परमम् उत्कृष्टं वैष्णवं पदं वैकुण्ठादिस्थानं तद्धातुर्ब्रह्मणो विसर्गस्य विविधसृष्टेरर्वाचीनो अनन्तरकालीन इदानीन्तनो मनुष्यो वेदितुं लब्धुं प्राप्तुं नार्हति न योग्यो विद्वानेव योग्य इत्यन्वयः । 'देवलोकात् पितृलोका-न्निरयाच्चापि यत् परम् । तिसृभ्यः परमं स्थानं वैष्णवं विदुषां गतिः' इति वचनात् । 'विदॢ लाभे' इति धातुः । 'पदॢ गतौ इति च[5] । अनेन वैष्णवपदप्राप्तौ ज्ञानमेव प्रयोजकं न कर्मादिकमिति सूचयति ॥ ३१ ॥

---

[2] वयसे उतेत्यत्र ।　[3] भक्षणं अर्थः यस्य तदिति ।　[4] नमस्ते अस्तु चक्रायेत्यत्र ।

[5] 'लाभ निष्पत्तौ' इति धातुः इत्यधिकः पाठः—च

[1] अत्र गद्यसंख्यानविषये व्याख्यातॄणां मतभेदोऽस्ति । ओंनमस्त इत्यारभ्य यत्कामेनोपसादिता इत्यन्तमेकमेव गद्य-मिति सत्यधर्मतीर्थाः । ओंनमस्त इत्यारभ्य हंसीत्यन्तमेकं गद्यम्, अथ तत्र भगवानित्यारभ्यानघार्हसि शम-यितुमिति द्वितीयम्, अथ भगवंस्तवास्माभिरित्यारभ्य यत्कामेनोपसादिता इति तृतीयमिति सत्याभिनवतीर्थाः ।

णात्मयोगसमाधिना परिभावितपरिस्फुटितपारमहंस्यधर्मेणोद्घाटित-
तमःकपाटद्वारेणापावृते आत्मलोके स्वयमुपलब्धो निजसुखानुभवो भवान्
दुरवबोध इव तव विहारयोगो यदशरणोऽशरीर इदमनपेक्षितासत्सम-
वायः स आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हंसि ॥ ३२ ॥

अथ तत्र भगवान् किं देवदत्तवदिह गुणविसर्गपतितः पार-
तन्त्र्येण स्वकृतकुशलाकुशलफलमुपाददाति आहोस्विदात्माराम उपशम-

---

हरेः प्रसन्नतायां गुणोत्कर्षप्रकाशिका स्तुतिरेव प्रयोजिकेति पद्यैर्ग्रथिताः कतिपयगुणा एव प्रकाशन्त इत्यतोऽपेक्षिताशेषगुणप्रकाशनार्थं गद्यैः स्तुवन्ति—नमस्त इति । भगवदादिशब्दैराविष्कृतगतये ते तुभ्यं नम इत्यन्वयः । परिव्राजकाश्चतुर्विधाः कुटीचकबहूदकहंसनिष्क्रिया इति । तेषां मध्ये परमहंसाख्यपरिव्राजकैः परमेणोत्तमेनात्मयोगेन पारमात्मध्यानेन यः समाधिश्चित्तैकाग्रता, तेन परिभावितः प्रवर्धितः परिस्फुटितश्च प्रकाशितो यः पारमहंस्यनामा धर्मः ज्ञानाख्यः, तेनोद्घाटितं तमःकपाटद्वारमज्ञानाख्यकपाटद्वारं येन सः । तथा तेनापावृते प्रकाशिते आत्मलोके वैकुण्ठादिनाम्नि स्वयमुपलब्ध अप्रयत्नेन दृष्टो यो भवान् स्वरूपसुखानुभवस्तस्य तव विहारयोगः जगज्जन्मलयादिहेतुभूतक्रीडोपायो दुरवबोध इव त्वदनुग्रहमन्तरेण दुर्बोध एवेत्यर्थः । कुतो दुर्ज्ञान इति तत्राह—यदशरण इति । अशरणोऽधिष्ठानरहितः, अशरीरः ज्ञानसाधनशरीररहितोऽप्राकृतत्वात् अनपेक्षितोऽसत्समवायः साहाय्यलक्षणो येन स तथा । अगुणो निर्गुणः स्वयं स त्वमविक्रियमाणेन स्वतः परतो वा विकाररहितेनात्मनैव स्वभावेनैव भोगादिप्रयोजनमन्तरेण इदं जगत् सृजसि रक्षसि संहरसीति यद् यस्मात् तस्मात् । कुलालादिसृष्ट्यादिविलक्षणत्वादिति भावः ॥ ३२ ॥

भगवत्स्वरूपनिर्धारणार्थं पूर्वपक्षयन्ति—अथेति । सृष्ट्यादिकर्मणि प्रवर्तमानो भगवान् अथेह गुणविसर्गपतितः संसारान्तःपातिदेवदत्तवत् परवशतया स्वकृतपुण्यापुण्यफलमुपादत्ते किम् ? अथवोदास्ते नोपादत्ते किम् ? कुतः ? आत्मरामः स्वमहिम्नि स्थितः । उपशमशीलः पूर्णानन्दानुभवः । समञ्जसदर्शनः शुद्धज्ञानः । एते प्रत्येकं हेतवोऽनुपादाने भवन्ति । इति न विदामो ह वाव न बुद्ध्यामहे हि । वावेत्येताभ्यामज्ञानिन एवं वदन्तीति सूचयन्ति न ज्ञानिन इति ॥

---

भगवन्नित्यारभ्य पासि हंसीत्यन्तमेकं, अथ तत्र भगवानित्यारभ्य पर्यवशेषित इति द्वितीयं, अथ ह्यावेत्यारभ्यावतीर्येत्यन्तं तृतीयं, एवमेनमपीत्यरभ्योपसादिता इत्यन्तं चतुर्थमिति चेष्टी । गोविन्दाचार्यास्तु दशगद्यखण्डानभिप्रयन्ति । तत्प्रकारस्तु तैः संपादित भागवततात्पर्ये स्पष्टः ।

शीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः ॥

न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वर अनवगाह्य-माहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलि-लान्तःकरणदुरवग्रहवादिनां च विवादानवसरे उपरतसमस्तमायामये केवलस्वात्ममायामन्तर्धाय को नु दुर्घट इव भवति स्वरूपद्वयाभावात् ॥

---

कस्मिन् सति किं स्यादिति तत्राह—नहीति[1]। कुशलाकुशलस्योपादानमनुपादानं चेत्युभय-मितरत्र विरुद्धम्। अत्र न हि विरोधः। कथम्? तत्राह—भगवतीति। भगवति को नु दुर्घट इव भवति? सर्वः सुघट एवेत्यन्वयः। सौघट्यं बहुभिर्विरुपपादयन्ति—अपरिगणितेति। न परिगणिताः गुणानां गणाः यस्य स तथा तस्मिन्। कुत इत्यत्राह— ईश्वर इति। अघटितघटकत्व-शक्तिमत्त्वाद् युक्तमित्यर्थः। इतोऽपि गुणानामगणितत्वं युक्तमित्याह- -अनवगाह्येति। अपरिच्छेद्य-महिमत्वात्। [2]अयमीशः स्वस्वेतरवृत्तित्वानाक्रान्तपरिच्छिन्ननिष्ठाधिकरणं मेयत्वाद् घटवदित्यादिमहाऽ-विद्यालक्षणकुतर्केण[3] देवदत्तवदयं कुशलाकुशलभोक्ता न वेति विकल्पेन, अत्र कर्मणः पुरुषार्थहेतुत्व-समर्थनादस्ति शास्त्रादिसङ्गतिरित्यादिलक्षणमीमांसया, मयाऽस्मिन् गुल्मे व्याघ्रोऽदर्शीत्यादिविद्यमानेन प्रमाणवदवभासमानेन यदीशो दुर्भगशरीरे स्थितस्तर्हि देवदत्तवद् तद्गतदुःखभोगः प्रसज्येत इत्यादि-

---

[1] चेट्टी आचार्यास्तु विरोधे इति सप्तमीमाश्रित्य व्याचक्रुः। तथा हि तद्व्याख्यानम्—विरोधे सहानवस्थान-लक्षणे विद्यमाने सति उभयं (स्वातन्त्र्यं पारतन्त्र्यं चेत्युभयं) न शङ्कितुमुचितमिति।

गोविन्दाचार्यास्त्वेवं व्याकुर्वन्ति। तथाहि–'ननु शुभफलं पिबन्नपि आत्मन्येव रमते। न कर्मभिर्बध्यत इति विरुद्ध-मेतत्। शुभं पिबन्नपि नाशुभं पिबतीति च विरुद्धम्। लोके स्याद् विरोधः। न हि भगवति विरोधः शङ्कनीयः। शुभं पिबति न कर्मभिर्बध्यते, करोति न सज्जते इत्याद्युभयमपि युज्यते भगवति। तत्र हेतुमाह—अपरिमित-गुणगण इत्यादि। तत् किमचिन्त्यशक्त्याश्रयणेन। शुद्धरूपेण किमपि न करोति शबलरूपेण सृष्ट्यादिकर्ता। जीवरूपेण कर्मभिर्बध्यत इति व्यवस्था किं न स्यात्? कुतर्कवादिनां भ्रान्तिविलसितमेवेदमित्याह—अर्वाची-नेत्यादि। एतादृशदुर्वादिनामगोचर एवायम्' इति।

[2] अत्र साध्ये स्वपदद्वयं बुद्धिस्थात्मपरमेव। परिच्छिन्ने निष्ठा आधेयता यस्येति व्युत्पत्त्या परिच्छिन्नत्वसमानाधि-करण इत्यर्थः। अनाक्रान्तेत्यन्तमस्य विशेषणम्। तथा च आत्मवृत्तित्वात्मेतरवृत्तित्वैतदुभयाभाववान् यः परिच्छिन्नत्वसमानाधिकरणो धर्मः तदधिकरणत्वं साध्यमिति दृष्टान्ते घटत्वादिधर्ममादाय साध्यसत्वनिर्वाहः। पक्षे आत्मत्वादिधर्ममादाय साध्यसिद्धावपि तस्य परिच्छिन्नत्वासिद्धेस्तत्सामानाधिकरण्यस्य निवेशः। कुतर्काऽयम्।

[3] वितर्केण—च।

समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ।

कुतर्केण चावगाह्यमाहात्म्यत्वादिति तत्राह[1]—अर्वाचीनेति । अर्वाचीना व्याप्त्यादिरहिता विकल्पादयो येषु तानि तथोक्तानि तैः । शास्त्रैः वैशेषिकादिभिः कलिलेन व्याकुलितेनान्तःकरणेन मनसा दुरवग्रहो येषां ते तथा । ते च (ते) वादिनस्तेषां विवादानवसरे विप्रतिपत्त्यगोचरे । इतोऽपि विवादाविषय इत्याह—उपरतसमस्तेति । केवलस्वात्ममायाम् अद्वन्द्वरूपसामर्थ्यम् अन्तर्धायावष्टभ्योपरतसमस्त-मायामये प्राकृततत्त्वभाववर्जिते । एवंविधेऽपि पुण्यापुण्यभोक्तृत्वं वयं न विद्महे, ये वदन्ति ते मूढाः असुरप्रकृतय इत्यभिप्रेत्य स्वयमेव समाधत्ते—स्वरूपेति । 'एकमेवाद्वितीयम्, निरनिष्टो निरवद्यः' इत्यादिश्रुतेः, सुखी दुःखीत्यादिस्वरूपद्वयानुपपत्तेः । न चायं संशयः सुराणाम् । 'स्वतन्त्रः परतन्त्रो वा ज्ञोऽज्ञो दुःखी सुखी नु किम् । इत्यादिसंशयः क्व स्याज्ज्ञानिनां पुरुषोत्तमे' इति (वचन) विरोधात् । तर्हि ज्ञानिनः कथं वदन्ति (इति) चेदुच्यते । अनन्तगुणत्वात् पूर्णशक्तित्वाच्च स्वातन्त्र्यादिकमेव जानन्ति । तदुक्तम्—'तस्यानन्तगुणत्वाच्च पूर्णशक्तित्वतो हरेः । स्वातन्त्र्यादिकमेवास्य विदो जानन्ति निश्चयात्' इति । निरवयवस्य जीवस्य पुण्यापुण्यभोक्तृत्वं युज्यते । 'घटकत्वाद् दुर्घटस्य दुर्ज्ञेयत्वाच्च सर्वशः । तच्छक्तेरविदो जीवं परतन्त्रं वदन्त्यमुम् । एवं दुर्घटया शक्त्या ज्ञाज्ञानां परमेश्वरः' इति वचनात्[2] । यद्वा पारतन्त्र्येण कुशलाकुशलादिकमनुभवति किम् उत स्वातन्त्र्येणोदास्त इति संशयं न विदामः[3] । किन्त्वनन्तशक्तेरनन्तगुणस्य हरेः पारतन्त्र्यादिकं कुतो घटत इति निश्चिनुमः । अस्मिन्नर्थे च 'स्वतन्त्रः परतन्त्रो वा ज्ञोऽज्ञो दुःखी सुखी नु किम्' इत्यादिनानमनुसन्धेयम् । इतोऽपि न घटत इत्याह—न हीति । विरोधो हि यस्मात् तस्मादुभयमेकस्य न युक्तमित्यर्थः[4] । ननु निर्गुणस्य हरेः गुणित्वमकिञ्चनस्येशित्वं स्वव्यतिरिक्तरहितस्य माहात्म्यमवाङ्मनसगोचरस्य विचारविषयत्वमकर्तुः कर्तृत्वमित्यादिसर्वं दुर्घटमिति तत्राह—भगवतीति । तर्हि उपाधिभेदाद् दौर्घट्यपरिहारोऽस्त्विति तत्राह—स्वरूपेति[5] । ननु 'मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा' इत्यादि

---

[1] परिच्छिन्नमहिमत्वादित्याक्षेपे तत्र समाधानमाहेत्यर्थः ।

[2] तात्पर्योदाहृततन्त्रभागवतवचनमिदं तत्रैवोत्तरत्रान्वयि ।

[3] न विदामः न प्राप्नुमः । संशयो नास्त्यस्माकमिति यावत् ।

[4] स्वातन्त्र्यपारतन्त्र्ययोर्ज्ञानाज्ञानयोः सुखदुःखयोश्च विरोधात् तदुभयमीश्वरस्य न युक्तमित्यर्थः । न हि विरोध उभयमिति मूलस्यार्थान्तरवर्णनमिदम् ।

[5] गोविन्दाचार्यास्तु स्वरूपद्वयाभावादित्येतन्नास्मिन् खण्डेऽन्वेति, अपि तूत्तरत्रेत्यभिप्रेत्य योजनान्तरं दर्शयामासुः । तथा च 'स्वरूपद्वयाभावात् समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम्' इत्येकः खण्डः (३६ तमः) । तद्व्याख्यानं तु—'ननु ब्रह्मणि तावद् द्वयी प्रतीतिः । जीवो ब्रह्मैव नापर इति केषाञ्चन ।

स एव नः सर्ववस्तुषु वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारण-कारणभूतः[1] सर्वप्रत्यगात्मत्वात् सर्वगुणाभासोपलक्षित एक एव पर्यव-शेषितः ॥

---

कथं संगच्छत इति चेत् तत्राह—**समेति** । सममतीनामनन्तं सच्चिदानन्दलक्षणं ब्रह्मेति यथार्थबुद्ध्याऽ-नुसरसि तथात्वेन प्रकाशस इत्यर्थः । विषममतीनामसुरप्रकृतीनां मतमभूतिरित्यसुरा इति मिथ्याबुद्ध्या दुःखी छिन्नो विद्ध इत्याद्याकारेण दृश्यस इत्यर्थः । अत्र दृष्टान्तमाह—**यथेति** ।

यथा रज्जुखण्डः (खण्डस्य ?) सर्पोऽयमिति मन्दान्धकारे मन्दितेन्द्रियस्य ज्ञानं, स एव पुन-रालोकादिनाऽऽलोकिते स्थले निर्दुष्टेन्द्रियस्य रज्जुखण्ड एष इति (प्रतीयते) । तदुक्तम्—'यथा रज्जुः सर्पधिया रज्जुबुद्ध्यावगम्यते । तथा यथार्थबुद्ध्या वा मिथ्याबुद्ध्याऽवगम्यते[2] । स्वेच्छयैव महाविष्णुः फलदश्चानुसारतः' इति ।

तथा स एव पुनर्भगवान् सर्ववस्तुषु वस्तुस्वरूपोऽप्रतिहतस्वरूपः । 'वसनाद्[3] वासयेद् वस्तु नित्याप्रतिहतत्वतः' इत्यादेः । तादात्म्यं किं न स्यात् ? अत्राह—**सर्वेश्वर इति** । प्रत्यगात्मत्वेन सर्वेश्वरत्वं हरेरेवेत्याह—**सकलेति** । ननु कुलालादिवद् बाह्यकारणत्वमस्तु नान्तः, परिच्छिन्नत्वापत्तेः, तथा च सकलकारणकारणत्वमयुक्तम् । अत्राह—**सर्वप्रत्यगिति** । सर्वेषामपि प्रत्यगात्मत्वेनान्तर्यामि-त्वेन तत्तद्वस्तुतत्तच्चेष्टादिकारणत्वेनापरिच्छिन्नस्यापि आकाशवदुपपत्तेः । तदन्तःस्थस्य तत्तददृष्टप्राप्य-

---

गुणगणार्णवं विलक्षणमित्यपरेषाम् । तेन रूपद्वयमवगम्यते मायोपहितं शुद्धं चेति । एवं मूलरूपं शुद्धं, राम-कृष्णादिकमवताररूपं दुःखबन्धादिदर्शनान्मायोपहितमिति स्फुटं प्रतीयते । अतो रूपद्वयाङ्गीकारेण विरुद्धधर्म-योरविरोध इति दुराग्रहिणं प्रति 'दुरवग्रहवादिनां विवादानवसरे' इति सूत्रितमेव समाधानं मुखत आह—स्वरूपद्वयाभावात् । न हि शुद्धमशुद्धं चेति भगवतो रूपद्वयं संभवति । अवताराणामपि मूलरूपादनतिरेकात् । कथं तर्हि द्वयी प्रतीतिः ? अवतारेषु च दुःखादिप्रतीतिः ? भ्रान्तिरेवेत्याह—समविषममतीनाम् । मतमनु-सरसि यथामतं प्रतीयसे । सुमतीनां स्वतन्त्रत्वेन पूर्णगुणत्वेन । विषममतीनां परतन्त्रत्वेन जीवत्वेन च । तद्यथा लोके रज्जौ सर्पधियां, अयथार्थमतीनामिति यावत्, सर्पत्वेनैव रज्जुखण्डः प्रतीयते । यथार्थमतीनां तु रज्जुखण्डत्वेनैव । नैतावता रज्जुखण्डस्य स्वाभाविकं मायिकं चेति स्वरूपद्वयम् । विवादानवसरे कथं विवाद इत्यस्य चेदं समाधानम्—भ्रान्त्यैव विवाद इति' इति ।

[1] सकलजगत्कारणभूतः—प्र [2] यथार्थबुद्ध्या च मिथ्याबुद्ध्या च गम्यते—ह

[3] वासनात्—छ 'वसनाद् वासनाद् वस्तु नित्याप्रतिहतं यतः । वासेनेदं यतस्तुभ्यमतस्तद् ब्रह्म शब्द्यते' इति प्रथमस्कन्धतात्पर्ये ।

अथ ह वाव तव महिमामृतरससमुद्रविप्लुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः[2] साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपरिवर्तः ॥

त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिः यथाऽपराधं दण्डं दण्डधर अवतीर्य[3] ॥ ३३ ॥

---

दौर्भाग्यप्राप्तिः स्यात् ? अत्राह—सर्वेति । सर्वगुणानामाभासेन सम्यक् प्रकाशेनोपलक्षितो ज्ञानिभिः सम्यग्दृष्टः, इतरैरनुमीयत इत्यर्थः । न च स्थानभेदात् तस्य भेद इत्याह—एक इति । 'स वा एष आत्मा नेति नेति' इत्यादिपरिशेषलक्षणप्रमाणात् एक एवेति निश्चितेत्यर्थः[4] ॥

महतामनुभवापरपर्यायसाक्षिप्रत्यक्षं हरेरेकत्वे निर्दोषत्वे संसारनिवर्तकमहामहिमत्वे प्रमाणमाहुः—अथेति । विप्लुषा बिन्दुना सकृदवलीढया निरन्तरसेवितया नितरां स्यन्दमानेन निरवरतेन[5] निरन्तरेण स्वरूपसुखेन । हे मधुमथन यस्मात् त्वं सर्वोत्तमः सर्वगुणपूर्णः सर्वात्मना निर्दोषः सर्वान्तर्यामी अथ तस्मादेकान्तिनो हरावर्पितशरीरेन्द्रियप्राणसर्वस्वाः भागवताः य एते कथं त्वच्चारणाम्बुजसेवां विसृजन्ति[6] एवेत्यन्वयः । ह वा व इत्येतैर्निपातैः 'परमः परार्ध्यः' इति श्रुतेर्महिम्नः परमपरार्ध्यत्वं सूच्यते । सर्वभूतप्रियाः सन्यासिनोऽजातशत्रवस्तेषां सुहृत्, सर्वभूतानां परेणाभीष्टकर्तृत्वात् प्रियश्च सुहृच्च । 'परेयं प्रियनामा' इति वचनात् । निरन्तरं सन्तुष्टमनस अविसर्जने कारणमाहुः—स्वार्थेति । यत्र त्वच्चरणाब्जसेवायाम् । परिवर्तः परिभ्रमणम् ।

स्वाभिप्रायं विज्ञापयितुमुपोद्घातमाहुः—त्रिभुवनेति । त्रिभुवनमेवात्मभवनं यस्य स तथा । त्रिभुवनस्य य उपद्रवः सोऽवश्यं परिहर्तव्य इति द्योतनायेदं विशेषणमिति ज्ञातव्यम् । एवमेवोत्तरविशेषणानि अभिप्रायगर्भाणि । त्रीणि नयनानि यस्य स तथा, नृसिंह इत्यर्थः । 'विष्णोर्नृसिंहनामानि

---

[1] अनवरतेन—छ, प्र [2] आत्मप्रियाः सुहृदः—प्र [3] यथाऽपराधं दण्डधरोऽवतीर्य—प्र
[4] निश्चित इत्यर्थः इति स्यात् । [5] अनवरतेन [6] 'उत नैव' इत्यधिकः—प्र

एवमेनमपि भगवन् जहि त्वाष्ट्रं वृत्रासुरं यदि मन्यसे।
अस्माकं तावकानां तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां ।
स्वलिङ्गविधारणेनात्मसात्कृतानामनुकम्पानु[1]रञ्जितविशदरुचिरशिशिर-
स्मितावलोकनेन विगलितमधुरमुखरितवचसाऽमृतकलया चान्तस्ताप-
मनघार्हसि शमयितुम् ॥

---

त्रिनेत्रोग्रादिकानि तु' इत्यादिवचनात् नृसिंहसुदर्शनादयस्त्रिनेत्रादिनामानः। त्रयो लोकास्त्रिलोकविषयाः ज्ञानलक्षणाः प्रकाशाः यस्य स तथा, सर्वज्ञ इत्यर्थः। त्रिलोकस्य [2]त्रिलोकनिवासिनो जनस्य मनोहरोऽनुभावो यस्य स तथेति वा। मायागुणव्यतिकराद्यदुरुर्विभासीति वचनात्[3] विभूतय इत्युच्यन्ते देवादयो न तु स्वरूपत्वात्। अपिशब्दान्मत्स्यादय एव साक्षाद्विभूतय एव गम्यन्ते[4]। 'विविधभावस्य पात्रत्वात् सर्वे विष्णोर्विभूतयः' इति च। ये विभूतिशब्दवाच्या दितिजादयोऽभूवन् तेजामनुपक्रमसमयः[5] क्षयप्रारम्भकालोऽयमिति मत्वा स्वात्ममायया स्वरूपभूतेच्छया, स्वमहिम्ना शुक्रशोणितसंबन्धमन्तरेण वा, सुराद्याकृतिभिरवतीर्य यथापराधं दण्डं त्रैलोक्यापहरणादि लक्षणापराधमनुसृत्य बल्यादीनां धृतवानसीत्यन्वयः। मिश्रिताकृतिभिर्नरसिंहादिभिः। सुराद्याकृतिभिरित्यनेन विभूतित्वं विवृतमिति ज्ञातव्यम् ॥ ३३ ॥

किं बहूक्तेनापेक्षितं वक्तव्यमिति तत्राह—**एवमिति**। यदि मन्यसे, कर्तव्यं तर्हीति शेषः। किन्त्वेदं कर्तव्यमिति प्रार्थयन्ते—**अस्माकमिति**। हृदयनिगडानां हृदयाख्यशृङ्खलानाम्। चक्रशङ्खादिलाञ्छनानां स्पष्टतया धारणेनात्मसात्कृतानां तद्वद्भूतानाम्। अनुकम्पया [6]रञ्जितं स्निग्धं च विशदं निर्मलं च रुचिरं चारु च शिशिरं शीतलं च यत् स्मितं तेन युक्तेनावलोकनेन निरीक्षणेन विगलितं निर्गतं च मधुरं मधुरितं च मुखरितं मन्द्रं च यद् वचस्तेनामृतकलया, युक्तेनेति शेषः। वचोलक्षणयाऽमृतकलयेति वा।

बुभुक्षितबालवत् सर्वज्ञस्य तव[7] हृदयभावातिरेकादुत्कथितमिव[8] यद् विज्ञापनमस्मदीयं तदस्मदज्ञाननिमित्तमित्यभिप्रेत्याहुः—**अथेति**। दिव्यमायया स्वरूपेच्छया विनोदो लीला यस्य स तथा। निकायानां राशीनां ब्रह्मस्वरूपेण बहिः, प्रत्यगात्मस्वरूपेणान्तः। [9]यथादेशादिक्रियाविशेषणम्। तेषां देशकालादीनाम् उपादानोपलम्भकतया कारणत्वप्रापकत्वेन उपादानत्वेनोपलम्भकत्वेनेति वा, सर्वमनु-

---

[1] अनुकम्पया रञ्जित—ज [2] त्रैलोक्य—छ,प्र [3] भाग ३·१०·१ [4] अवगम्यन्त इति स्वरसम्।
[5] अनुपक्रमसमयः पतदवनसमयः इति स। पराजयसमय इति चेट्टी। [6] अनुरञ्जितं—ज
[7] सर्वज्ञस्य तव पुरत इत्यर्थः। [8] उत्कथितमिवेति चारु। [9] यथादेशेत्यादिक्रियाविशेषणमिति स्यात्।

अथ भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण यथादेशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयाऽनुभवतः सर्वप्रत्ययसाक्षिणः आकाशशरीरस्य साक्षात् परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद् विस्फुलिङ्गादिभिरिव हिरण्यरेतसः । अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशत[1]पलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसन्नानां वयं यत्कामेनोपसादिताः ॥

अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम् ।
ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च ॥ ३४ ॥

हंसाय [2]दभ्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय ।
सत्संग्रहाय भवपान्थनिजाश्रयाय शश्वद् वरिष्ठगतये हरये नमस्ते ॥३५॥

---

भवतः । आकाशशरीरस्याकाशवत् सूक्ष्मरूपस्य । 'आकाशशरीरं ब्रह्म' इति श्रुतेः । लिङ्गशरीरस्य व्यावृत्त्यर्थं परब्रह्मण इति । मुक्तजीवस्य व्यावृत्त्यर्थं साक्षादिति । साक्षात् परब्रह्मत्वं चित्प्रकृतेरप्यस्तीत्यतः परमात्मन इति । हिरण्यरेतसोऽग्नेः महाप्रकाशस्य विस्फुलिङ्गादिभिरल्पप्रकाशैरग्निकणैः खद्योतैश्च । यतस्त्वमस्माकं सर्वापदां परिहर्तासि अतो वयं यत्कामेन त्वाष्ट्रहननलक्षणवाञ्छया तव पादकमलच्छायामुपगताः तदुपसन्नानाम् 'अधीहि भगवो ब्रह्म' इति समित्पाणिशिष्यवच्छरणं गतानामस्माकं तत्कार्यमुपकल्पय समर्थयस्वेत्यन्वयः ।

बहुप्रार्थनयैव स्वाभीष्टफलप्राप्तिः स्यादिति दर्शयितुमेव गद्येन विज्ञापितमेव पद्यप्रबन्धेन विज्ञापयन्ति—**अथो इति** । तेजांसि सामर्थ्यलक्षणानि ॥ ३४ ॥

हंसवत् सारग्राहिणे । दभ्रनिलयाय हृदयाकाशनिवासाय । 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' इति श्रुतेः । निरीक्षकाय चेतनकर्मसाक्षिणे । कृष्णाय 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः' इत्यतः सन्ततपूर्णानन्दाय[3] । कृतौ पूर्णौ षणौ बलप्राणौ यस्य स तथा तस्मै (वा) । भवपान्थाः संसारमार्गे वर्तमानाः तेषां निजाश्रयाय । 'निजमात्मीयनित्ययोः' इत्यभिधानम् । शश्वदेकप्रकारा वरिष्ठा धर्मादेरत्युत्तमा गतिर्मुक्तिलक्षणा यस्मात् स तथा तस्मै । हरय आपत्परिहरणशीलाय ॥ ३५ ॥

---

[1] शतपत्रपलाश—ज [2] दहेति चारु-बहुषु कोशेषु तथैव दृश्यते । [3] संपूर्णानन्दाय—ज

श्रीशुक उवाच —

अथैवमीडितो राजन् सादरं त्रिदशैर्हरिः ।
स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः ॥ ३६ ॥

श्रीभगवानुवाच —

प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया ।
आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ३७ ॥

किं दुरापं मयि प्राप्ते तथापि विबुधर्षभाः ।
मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित् ॥ ३८ ॥

न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ।
तस्य तानिच्छतो यच्छे[1] यदि सोऽपि तथाविधः ॥ ३९ ॥

---

स्वमुपस्थानं स्वविषयां स्तुतिम् ॥ ३६ ॥ मदुपस्थानलक्षणया विद्यया पुंसामात्मैश्वर्यस्मृतिः माहात्म्यस्मृतिः, मयि भक्तिश्च भवतीत्यन्वयः ॥ ३७ ॥

प्राप्ते प्रत्यक्षे । तथापि फलप्राप्त्यनायासेऽपि । भक्तिज्ञानप्रसादेभ्योऽन्यत् । अत्र हेतुः— **तत्त्वविदिति** । अनेनायमधिकारिषु सुखाधिक्यप्राप्तियोग्य इति ज्ञायते ॥ ३८ ॥

तत्त्ववित् तथाऽस्तु, अभिलाषकस्य किं फलमिति तत्राह— **नेति** । यः कृपणः कामानभिलषन् स्वस्य मोक्षलक्षणं श्रेयो न वेद । कुतः ? गुणवस्तुदृक् स्वर्गादेर्गुणानां शब्दादिविषयाणां वस्तुदृक् अप्रतिहतत्वदर्शी नित्यत्वज्ञानीत्यर्थः । अहमिच्छतोऽभिलाषकस्य तस्य तान् कामान् यच्छे ददाम् । त्वां भजमानस्य तथाविधफलदातृत्वं तव कथं युक्तमिति तत्राह— **यदिति** । यदि स मां भजमानोऽपि तथाविधः नश्वरफलस्वीकारयोग्यः, उत्तमाधिकारी न स्यात् तर्हि तस्मै ऐहिकान् कामान् ददाम् । यश्च भजकोऽप्युत्तमो न स्यात् तस्मै स्वर्गादिकामान् ददामीति विशेषमभिप्रेत्याचार्यैः '[2]उत्तमो न भवति चेत्' इति व्याख्यातम् । यच्छेदिति पाठेऽयमर्थः । त्वद्भक्तादन्यः (भजति चेत् तदा) कथमिति तत्राह —**नेति** । गुणवस्तुदृक् त्रिगुणजन्यशरीरादेर्वस्तुत्वज्ञानी दीनो यो मुग्धः श्रेयो मोक्षाख्यं न वेद । तद् विनान्यद् वाञ्छेच्च तस्य सेवकस्य सेव्योऽपि तथाविधोऽत्युत्तमो न भवति चेत् तर्हि तादृशान् कामान् यच्छेत् दद्यात्, मत्प्रेरित इति शेषः ।

---

[1] यच्छेत्—वि

[2] अत्युत्तमो न भवति चेत्—स.ह. । विजयध्वजतीर्थैरपि पूर्वत्रोत्तरत्र च तथैवोदाहृतम् ।

स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्मभिः ।
न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः ॥ ४० ॥

मघवन् यात भद्रं वो दध्यञ्चमृषिसत्तमम् ।
विद्याव्रततपःसारं गात्रं याचत मा चिरम् ॥ ४१ ॥

स वै ह्यधिगतो दध्यङ् अश्विभ्यां ब्रह्म निष्कृतम् ।
तद् वा अश्वशिरं नाम तयोरमरतां व्यधात् ॥ ४२ ॥

---

(कामान् प्रयच्छन्) कथमत्युत्तमो न भवतीति तत्राह—स्वयमिति विद्वांस्तत्तद्योग्यमुक्तिविशेषं जानन्नत्युत्तमः स्वयमज्ञाय अज्ञानिने पुंसे कर्मभिर्निःश्रेयसं न वक्ति नोपदिशति । किन्तु 'तमेवं विद्वान्' इति श्रुतेः ज्ञानेनैव । 'यथा पथ्यमेव अभिषिञ्चति ददाति नापथ्यमित्यल्लोपेन भिषक्, भिनत्ति रोगं सिञ्चति आप्याययति प्राणमिति वा, वैद्यः, पानीयं वाञ्छतो ज्वरादिरोगार्तस्यापथ्यं पानीयादिद्रव्यं न राति न ददाति । तस्मादनीदृश उत्तमो न भवतीत्यर्थः । ननु कृपणः कर्मणा सिद्धिकामित्वाद्धि नात्युत्तम इत्यभिप्रेतं (इति) कथमुच्यते, 'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि', 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः' इत्यादौ भगवतैव कर्मविधानात् ? अत्राह—स्वयमिति । मादृशो विद्वान् स्वयं केवलैः कर्मभिरज्ञाय अज्ञानिने निःश्रेयसं न वदति[2] किन्तु ज्ञानद्वारा शुद्धान्तःकरणाय । यथा भिषगपि । केवलफलकामिन एव तादृशफलं दीयते । अतः साकल्यफलस्वीकारयोग्य[3] इति नियम्यते । तर्हि किमर्थं तस्मै तादृशमपि दीयत इति चेन्न युष्मद्भक्तत्वेन फलदानस्य युष्मदिष्टत्वात् तदेव मम प्रियम् । युष्मत्कामाभावे तत्फलं न दद्याम् । भवतां च मत्प्रियकामित्वात् । एतदाचार्यैरुक्तम्—'युष्मत्कामो मत्प्रिय एव, अन्यथा न दद्यामिति भावः । विष्णोः प्रियं कामयन्ति देवा नैवाप्रियं क्वचित् । यद्यप्रियं कामयन्ति न रातीशो हितो यतः' इति । ननु यदि पुरुषेण निष्कामेन भवितव्यं तर्ह्यस्मत्कामो निष्फलो भवतोऽनिष्टत्वादिति शङ्का मा भूत्, त्वाष्ट्रहननस्य ममेष्टत्वान्मदिष्टमेव युष्माभिः कामितमित्यतो वाऽऽचार्यैः युष्मत्काम इत्याद्युक्तम् ॥ ४० ॥

एतत् कुत इत्याशङ्क्य त्वाष्ट्रहननोपायमाह-मघवन्निति । गानं ज्ञानं त्रायत इति गात्रम् । गतिसाधनत्वाद् वा ॥ ४१ ॥

जगतो धारकत्वाद् दधि ब्रह्म तदञ्चति गच्छतीति दध्यङ् । सोऽधिगतोऽधिकज्ञानवान् वै प्रख्यातः । 'दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच' इति श्रुतिः । एतदेवाह—

---

[1] यथेत्यस्य पानीयमित्यादिनाऽन्वयः । पथ्यमेवेत्यादि तु भिषज्शब्दनिर्वचनम् ।
[2] वदेत्—ज [3] स्वीकारायोग्य इति स्यात् ?

कृत्स्नं चाथर्वणं त्वाष्ट्रं वर्माभेद्यं मदात्मकम् ।
विश्वरूपाय यत् प्रादात् त्वाष्ट्राय त्वमधास्ततः ॥ ४३ ॥

---

**अश्विभ्यामिति** । यस्माद् दधीचोऽश्विनीदेवताभ्यां ब्रह्मविद्यालक्षणं नितरां कृतमापादितं स्वीकृतमिति यावत्, स इति । यद्वा निष्कृतं प्रवर्ग्याख्यं कर्म ब्रह्म चाश्विभ्यामुक्तवानिति शेषः । यद्वा ब्रह्माश्विनीदेवताभ्यामुक्तवान् । किमिति ? निष्कृतं सत्यप्रतिपालननिमित्तम् । दधीचा 'ब्रह्म दास्यामि' इति प्रतिज्ञातत्वात् तदनुपदेशोऽनृतवादित्वं स्यात् । तन्नामाह—**अश्वशिरमिति** । यद् दधीचाऽश्विभ्यामुपदिष्टं यच्च तयोर्वैद्याविल्युक्त्वा देवैर्दुर्लभीकृतामृतयोरश्विनोरमरतां मरणराहित्यं व्यधात् तद् ब्रह्म अश्वशिरं नाम । अत्रेतिहासमाचक्षते—आथर्वणो दध्यङ् प्रवर्ग्यब्रह्मविद्ययोर्दक्ष इति तं विज्ञायाऽऽत्मनोऽमरत्वं कामयमानावश्विनौ देवौ दधीचमुपागम्य त्वं प्रवर्ग्यब्रह्मविद्याविशारद इत्याकर्ण्यागताभ्यां तदर्थिभ्यामावाभ्यां ते वक्तव्ये इति विज्ञापयाञ्चक्रतुः । कर्मकाण्डोक्तकर्मणि प्रवृत्तेन[1] मया तत्समाप्य कालान्तरे वक्ष्येते इति तेनोदितौ तौ निजगृहाण्याजग्मतुः । एतस्मिन्नन्तरे आत्मनोऽन्यस्य विद्यातिशयमसहमानः सुरपतिस्तमृषिमुपसृत्य त्वया प्रवर्ग्यब्रह्मविद्ये कस्मैचिन्न वक्तव्ये रागलोभादिना वदतस्तव शिरश्छिन्द्यामिति तमनुशशास । एवं बहुतिथे कालेऽतिक्रान्ते नासत्याभ्यामागत्य पूर्वोक्तविद्ये वक्तव्ये इत्युक्तो मुनिरहमिन्द्रेण निषिद्धोऽस्मीत्यजीगदत् । तत्रोपायमाकलय्य निजशिरश्छेदात् प्रागेव तव शिरश्छित्वाऽन्यत्र निधाय कस्यचिदश्वस्य शिरश्छित्वा गले सन्धाय[2] तेनैते विद्ये ब्रूहि यदीन्द्रस्तदश्वशिरश्छिनत्ति तर्हि स्वकीयशिरः पूर्ववद् गले संयोज्य तुभ्यं दक्षिणां च दास्याव इति ताभ्यां देवचिकित्सकाभ्यामुक्तो दध्यङ् अश्वशिरसा ते विद्ये तयोरुपदिदेश इत्यतोऽश्वशिरं नामेति प्रख्यातमभूदिति । 'आथर्वणायाश्विनौ दधीचेऽश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्रवोचद् ऋतायंस्त्वाष्ट्रं यद् दस्रावपि कक्ष्यं वाम्' इति श्रुतिं चात्रोदाहरन्ति । हेऽश्विनावाथर्वणाय दधीचेऽश्वसंबन्धि शिरः प्रत्यैरयतं, प्रतिसंहितमकुरुतम् । स दध्यङ् वां मधु ब्रह्मविद्यालक्षणं प्रवोचत् प्रावोचत् । हे दस्रौ त्वष्ट्रा विश्वरूपाय प्रोक्तं त्वाष्ट्रं कक्ष्यं नारायणकवचं च वामुवाच । कीदृशः ? ऋतायन् यथातथं विद्यां जानन्, विद्यां वक्ष्यामीति वचनं सत्यं संपादयन्निति वा ॥ ४२ ॥

किञ्च नारायणकवचधारणाच्च दधीचोऽङ्गं वीर्यवदित्यभिप्रेत्याह—**कृत्स्नं चेति** । मदात्मकं वर्म नारायणकवचं चाथर्वणम् आथर्वणेन दधीचाऽधीतत्वात्, कृत्स्नम् अङ्गोपाङ्गसाहित्येनानूनं

---

[1] प्रवर्तमानेन—ज [2] सन्धास्यावः इति स्यात् ।

युष्मभ्यं याचितो दध्यङ्[1] धर्मज्ञोऽङ्गानि दास्यति ।
ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ।
येन वृत्रशिरोहर्ता मत्तेजउपबृंहितः ॥ ४४ ॥

तस्मिन् विनिहते यूयं तेजोऽस्त्रायुधसम्पदः ।
भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान् ॥ ४५ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे नवमोऽध्यायः ।

॥ अथ दशमोऽध्यायः ॥

श्रीशुक उवाच —
इन्द्रमेवं समादिश्य भगवान् विश्वभावनः ।
पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः ॥ १ ॥

---

त्वाष्ट्राय विश्वरूपाय प्रादात् । यच्च त्वं विश्वरूपादधाः । ततस्तस्मात्[2] त्वाष्ट्रं त्वष्टुर्वियमानत्वात् तन्नागत्वात्[3] तस्य विश्वरूपस्य वियमानत्वाच्च तथा ॥ ४३ ॥

युष्माकं याच्ञाभङ्गभयं मा भूदित्याह—युष्मभ्यमिति । अङ्गानीत्यवयवसाहित्यविवक्षया बहुवचनम् । किञ्चिदपि नावशेषयतीत्यर्थः । याचितोऽश्विभ्यामिति पाठेऽश्विभ्यां याचितो यथा ताभ्यां विद्यां प्रादात् तथा युष्मभ्यमप्यङ्गानि ददातीत्यर्थः । तैरङ्गैर्विश्वकर्मणा निर्मित आयुधश्रेष्ठो भवस्विति शेषः । येनायुधश्रेष्ठेन मत्तेजसोपबृंहितो भवान् ॥ ४४ ॥

तेजोऽस्त्रायुधसंपदः, तेन ग्रस्ता इति शेषः । मत्परान् न हिंसन्ति, केऽपीति शेषः । अत्र हर्याज्ञाकारित्वेन मुन्यादियाच्ञया न देवानां सामर्थ्यन्यूनतेति[4] दोषः । 'समर्था अपि याचन्ति देवा मुन्यादिकान् क्वचित् । आज्ञयैव हरेस्तेषां यशोर्थमपि नान्यथा ' इति वचनात् ॥ ४५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां षष्ठस्कन्धे नवमोऽध्यायः ।

॥ अथ दशमोऽध्यायः ॥

शत्रुनिग्रहोऽपि भगवत्प्रीतिजनकत्वेन मुक्तिसाधनं स्यादित्यभिप्रेत्य कतिपयैरध्यायैर्वृत्रवासवयोर्युद्धं निरूप्यते । तत्रादौ सतामभीष्टमवश्यं कर्तव्यं पुरुषेणेति देवेभ्यो दधीचेः[5] स्वाङ्गदानप्रकारं वक्तुमाह —इन्द्रमिति । 'सुरमत्स्यावनिमिषौ ' इत्यमरः ॥ १ ॥

---

[1] अश्विभ्याम्—वि [2] ततः त्वाष्ट्रं—ज [3] तन्नामकर्मिति स्यात् ?
[4] न्यूनतादोषः—छ सामर्थ्यन्यूनतेति शेषः—ज [5] दधीचः—प्र

तथाऽभियाचितो देवैर्ऋषिराथर्वणो महान् ।
मोदमान उवाचेदं प्रहसन्निव भारत ॥ २ ॥

अपि वृन्दारका यूयं न जानीथ शरीरिणाम् ।
संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः ॥ ३ ॥

जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ।
क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ ४ ॥

देवा ऊचुः —

किन्नु तद् दुस्त्यजं ब्रह्मन् पुंसां भूतानुकम्पिनाम् ।
भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥

नूनं स्वार्थपरो लोको न वेद परसङ्कटम् ।
यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥

---

संस्थायां चेतनापहः बुद्धिभ्रंशकरः यो द्रोहः दुःखलक्षण उपद्रवः तं वृन्दारका देवा अपि यूयं न जानीथेत्यन्वयः । सर्वप्राणिनां बुद्धिवृत्तिसाक्षित्वाद् (साक्षित्वेऽपि) भवतामित्यर्थः । अभिद्रोहस्य सर्वविषयज्ञाननाशकत्वात् ॥ ३ ॥

'आत्मा देहे समीरे च संसारिणि हरौ तथा' इत्यभिधानात् इह प्रियेषु वस्तुषु देहः प्रेष्ठः प्रियतमः ईप्सिततम इति यत् अतः कः पुमान् भिक्षमाणायातिथिरूपेण याचमानाय विष्णवेऽपि तं देहं दातुमुत्सहेत प्रयतेत ॥ ४ ॥

पुण्यश्लोकैः पुरुषैरीड्यानि स्तुत्यानि कर्माणि देहदानादीनि येषां ते तथा तेषाम् ॥ ५ ॥

नूनं प्रायः परसङ्कटं परदुःखं, दातुमशक्यं दातव्यं चेति वा, परसङ्कटं (यदि) वेद तर्हि न याचेत । सामान्यमुक्त्वा विशेषमाहुः—नेतीति । अशक्यमपि दातुं यदीश्वरः समर्थस्तर्हि याचितः सन् असौ दास्यामीति नेति नाह न वक्तव्यम्[1] । ते जानन्तोऽपीदृशो याचनीय इति जानन्तो वयं दातुं समर्थं भवन्तं याचामह इत्यभिप्रायः । न चात्र देवानां स्वात्मनो नीचमाथर्वणं याचमानानामपि अभिमानलक्षणतेजःक्षतिः शङ्कनीया । कार्यगौरवविवक्षया तदभावस्य प्रामाणिकत्वाद्, हर्याज्ञाकारित्वाच्च । 'आज्ञयैव महाविष्णोः कार्यार्थमपि च क्वचित् । नीचानपि तु याचन्ते स्वात्मनो गुणवत्तराः । नीचवाक्यं वदेयुश्च सुरा नैतावता क्वचित् । तेजःक्षतिर्भवेदेषां जनकस्य यथार्भके' इति वचनात् ॥ ६ ॥

---

[1] यदि ईश्वरः दानसमर्थः परसंकटं वेद तर्हि सोऽपि नेति नाह न दास्यामीति न प्रत्याचक्षीत इत्यर्थः ।

ऋषिरुवाच —

धर्मं वः श्रोतुकामेन यूयं वै[1] प्रत्युदाहृताः ।
एष वः प्रियमात्मानं त्यजन्तं सन्त्यजाम्यहम् ॥ ७ ॥

योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् ।
ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥

एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः ।
यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥ ९ ॥

अहो दैन्यमहो कष्टं पारक्यैः क्षणभंगुरैः ।
यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥ १० ॥

श्रीशुक उवाच —

एवं कृतव्यवसितो दध्यङाथर्वणस्तनुम् ।
परे भगवति ब्रह्मण्यात्मानं संनयन् जहौ ॥ ११ ॥

यत्ताक्षासुमनोबुद्धिस्तत्त्वदृग् ध्वस्तबन्धनः ।
आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥

अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ।
मुनेस्त्वस्थिभिरुत्सिक्तो भगवत्तेजसाऽन्वितः ॥ १३ ॥

---

प्रत्युदाहृताः निराकृता इवोक्ताः । त्यजन्तं त्यक्ष्यन्तम् ॥ ७ ॥

अध्रुवेणात्मना अनित्येन देहेन । हे नाथाः । स्थावरैः स्तब्धैर्विवेकशून्यैरित्यर्थः ॥ ८ ॥

पारक्यैः परेषां श्वसृगालादीनां भक्ष्यभूतैः । अस्वार्थैः परप्रयोजनैः । स्वज्ञातिभिः स्वजनैः स्वविग्रहैः स्वदेहैश्च ॥ १० ॥

आत्मानं मनो ब्रह्मणि सम्यक् नयन् । आत्मानं देहम् ॥ ११ ॥

यत्ता इन्द्रियप्राणमनोबुद्धयो येन स तथा । हरेस्तत्त्वं स्वरूपं पश्यन् । योगं मूलाधारमारभ्य द्वादशान्तपर्यन्तं[2] प्राणोन्नयनलक्षणम् ॥ १२ ॥

उत्सिक्त उन्नद्धः ॥ १३ ॥

---

[1] मे—प्र [2] नासामारभ्य द्वादशांगुलान्तब्रह्मरन्ध्रलक्षणातुर्यस्थानपर्यन्तमिति प्राक्तनं विवरणम् ।

युतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत ।
स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥

वृत्रमभ्यद्रवच्छत्रुमसुरानीकयूथपैः ।
पर्यस्तमोजसा राजन् क्रुद्धो रुद्र इवान्तकम् ॥ १५ ॥

ततः सुराणामसुरै रणः परमदारुणः ।
त्रेतामुखे नर्मदायामासीद् वै प्रथमेऽन्तरे ॥ १६ ॥

रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ।
मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥

दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वया श्रिया ।
नामृष्यन्नसुरा राजन् मृधे वृत्रपुरःसराः ॥ १८ ॥

नमुचिः शम्बरोऽनर्वा द्विमूर्धा वृषभोऽम्बरः ।
हयग्रीवः शंकुशिरा विप्रचित्तिरयोमुखः ॥ १९ ॥

पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कचः ।
व्योमकेशो विरूपाक्षः कपिलोऽथ विभावसुः ॥ २० ॥

इल्वलो बल्वलश्चैव दन्दशूको वृषध्वजः ।
कालनाभो महानाभो भूतसन्तापनो वृकः ॥ २१ ॥

दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ।
सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः ॥ २२ ॥

प्रतिषिध्येन्द्रसेनाग्र्यं मृत्योरपि दुरासदम् ।
अभ्यद्रवन्नसम्मीताः सिंहनादेन दुर्मदाः ॥ २३ ॥

---

पर्यस्तं परिवृतम् ॥ १५ ॥

ननु कस्मिन् काले कस्मिन् देशे वृत्रवासवयोर्युद्धमभूदिति तत्राह—त्रेतामुख इति । अन्तरे अस्मिन् वर्तमाने वैवस्वताख्यमन्वन्तरे तत्रापि प्रथमे युगे प्रथमचतुर्युगे तत्रापि त्रेतामुखे त्रेतायुगस्यादौ नर्मदायां नर्मदातीरे । गङ्गायां घोष इतिवत् तत्र तत्र लक्षणोक्त्या प्रथमरणस्तु नर्मदातीरे, द्वितीयरणस्तु मृतिकाले समुद्रतीर इति विशेषो ग्रन्थान्तरेण ज्ञातव्यः ॥ १६ ॥

कार्तस्वरपरिच्छदाः सुवर्णालङ्काराः ॥ २२ ॥

गदासिपरिघैर्बाणैः प्रासमुद्गरतोमरैः ।
शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः ।
सर्वतोऽवाकिरन्नस्त्रैः शस्त्रैश्च विबुधर्षभान् ॥ २४ ॥

न तेऽदृश्यन्त सञ्छन्नाः शरजालैः समन्ततः ।
पुङ्खानुपुङ्खैः पतितैः प्रावृषीव नभो घनैः ॥ २५ ॥

न ते शस्त्रास्त्रबाणौघा ह्यासेदुः सुरसैनिकान् ।
छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २६ ॥

अथ क्षीणास्त्रशस्त्रौघा गिरिशृङ्गद्रुमोपलैः ।
अभ्यवर्षन् सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २७ ॥

तानक्षतान् स्वस्तिमतो निशम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ।
द्रुमैर्दृषद्भिर्विविधाद्रिशृङ्गैरथाक्षिपंस्तत्र सुरेन्द्रसैनिकान् ॥ २८ ॥

सर्वे प्रयासा अभवन् विमोघाः कृताः कृता देवगणेषु दैत्यैः ।
कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ २९ ॥

ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ।
पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरस्तसाराः ॥ ३० ॥

वृत्रोऽसुरांस्ताननुगान् मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ।
पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ ३१ ॥

---

अवाकिरन् अवर्षन् ॥ २४ ॥ प्रावृषि वर्षाकाले ॥ २५ ॥

लघुहस्तैः शीघ्रवेधिभिः देवैः । सिद्धपथे व्योम्नि । स्वप्राप्तेः पूर्वं मध्यमार्ग एव छिन्नाः ॥ २६॥

वृत्रो नाथो येषां ते तथा । दृषद्भिः पाषाणैः ॥ २८ ॥

प्रयासाः प्रहारलक्षणाः प्रयत्नाः । कृष्णोऽनुकूलोऽनुग्रहाभिमुखो येषां ते तथा तेषु । रुशतीः हिंसनाः[1] । रुश रिश हिंसायामिति धातुः । महत्सु दुर्वासःप्रभृतिषु यतिषु क्षुद्रैः हंसडिभिकादिजनकल्पैः ॥ २९ ॥

पतिं वृत्रम् । अस्तसाराः निरस्तबलाः ॥ ३० ॥ मनस्वी प्रशस्तमनाः ॥ ३१ ॥

---

[1] हिंसती:—प्र, च

कालोपपन्नं रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ।
हे विप्रचित्ते नमुचे पुलोमन् मयानर्वन् शम्बर मे शृणुध्वम् ॥ ३२ ॥

जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ।
लोको यशश्चाथ ततो यदि ह्यमुं को नाम मृत्युं न वृणीत युक्तम् ॥

द्वौ सम्मताविह मृत्यू दुरापौ यद् ब्रह्मसन्धारणया जितासुः ।
कलेवरं योगरतो विजह्याद् यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३४ ॥

इति श्रीमद्भागवते पञ्चस्कन्धे दशमोऽध्यायः ॥ १० ॥

॥ अथैकादशोऽध्यायः ॥

श्रीशुक उवाच —

त एवं शंसतो धर्म्यं वचः पत्युरचेतसः ।
नैवागृह्णन् भयत्रस्ताः पलायनपरा नृप ॥ १ ॥

विशीर्यमाणां पृतनामासुरीमसुरर्षभः ।
कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत् ॥ २ ॥

दृष्ट्वाऽतप्यत संक्रुद्ध इन्द्रशत्रुरमर्षितः ।
तान् निवार्यौजसा राजन् निर्भर्त्स्येदमुवाच ह ॥ ३ ॥

---

इतोऽपि युद्धमरणं प्रशस्तमित्याह—द्वाविति । योगरतो जितप्राणश्च यो ब्रह्मसन्धारणया ब्रह्मध्यानेन कलेवरं विजह्यादिति यद् युद्धादनिवृत्तोऽग्रणीः यो वीराणामग्रतो गत्वा वीरशये युद्धाङ्गणे शरीरं जहातीति यच्च मरणं, [1]तयोर्द्वावेतौ मृत्यू दुष्प्रापौ सम्मतौ शास्त्रविहिताविन्यन्वयः ॥ ३४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
पञ्चस्कन्धे दशमोऽध्यायः ।

॥ अथैकादशोऽध्यायः ॥

अचेतसो बुद्धिमत्प्रवृत्तिस्मरणरहिता ॥ १ ॥ काल्यमानां विद्राव्यमाणाम् ॥ २ ॥

---

[1] तयोः संबन्धिनौ द्वावेतौ मृत्यू दुष्प्रापाविलर्थः ।

वृत्र उवाच —

किं व उच्चरिता मातुर्धावद्भिः पृष्ठतो हतैः ।
न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥ ४ ॥

यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि ।
अग्रे तिष्ठत मात्रं मे न चेद् ग्राम्यसुखे स्पृहा ॥ ५ ॥

एवं सुरगणान् क्रुद्धो भीषयन् वपुषा रिपून् ।
व्यनदत् सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥

तेन देवगणाः सर्वे वृत्रविस्फोटनेन वै ।
निपेतुर्मूर्च्छिता भूमौ यथैवाशनिना हताः ॥ ७ ॥

ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः ।
गां कम्पयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः ॥ ८ ॥

विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाम् ।
चिक्षेप तामापततीं सुदुस्सहां जग्राह वामेन करेण लीलया ॥ ९ ॥

स इन्द्रशत्रुः कुपितो भृशं तया महेन्द्रवाहं गदयोरुविक्रमः ।
जघान कुम्भस्थल उन्नदन् मृधे तत्कर्म सर्वे समपूजयन् नृप ॥ १० ॥

---

हे देवाः यूयं मातुरदितेरुच्चरिता अवमेहनवन्निर्गताः किम् ? उभयेषामपि देहान्निष्कान्तत्वा विशेषात् कुतोऽस्माकम् ? अत्राह— धावद्भिरिति । पृष्ठतो हतैर्धावद्भिः असुरनायकैः वः युष्माकं किं प्रयोजनम् ? अधर्मत्वात् । अयमपि कुतः ? अत्राह—नहीति । स्वर्ग्यः स्वर्गप्राप्तियोग्यः ॥ ४ ॥

हे क्षुल्लकाः अल्पा देवाः । युष्माकं हृदि सारं धैर्यं वाऽस्ति । मात्रं क्षणकालम् । ग्राम्यसुखे विषयभोगजनितानन्दे ॥ ५ ॥

विचेतसो मूर्च्छिताः ॥ ६ ॥

एतदेव स्पष्टयति — तेनेति । विस्फोटनं प्रकाण्डताडनम्[1] ॥ ७ ॥

[2]नालं नलसमुदायलक्षणं वनम् । यूथपतिर्गजः ॥ ८ ॥

अभिद्रवते अभ्यागच्छते ॥ ९ ॥ महेन्द्रवाहम् ऐरावतम् ॥ १० ॥

---

[1] विस्फोटनेन नादेन—चेट्टी [2] नलानां कमलानामिदं नालं, तत्संबन्धि वनम् । नलिनं तु नलं मतमिति विः—स

ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ।
अपासरद् भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक् सप्तधनुर्भृशार्तः ॥ ११ ॥
न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा ।
इन्द्रोऽमृतस्यन्दिकराभिमर्षवीतव्यथः क्षतवाहोऽवतस्थे[1] ॥ १२ ॥
स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य ।
स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसन्जगाद ॥ १३ ॥
वृत्र उवाच —
दिष्टया भवान् मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ।
दिष्टयाऽनृणोऽद्याहमसत्तम त्वया मच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् ॥
यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य ।
विस्रभ्य खड्गेन शिरांस्यवृश्चः पशोरिवाकरुणः स्वर्गकामः ॥ १५ ॥
ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् ।
कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदन्तु गृध्राः ॥ १६ ॥
अन्ये तु ये त्वाऽनु नृशंसमज्ञा यद्युद्यतास्त्राः प्रहरन्ति मह्यम् ।
तैर्भूतनाथं सगणं निशातत्रिशूलनिर्भिन्नगलैर्यजामि ॥ १७ ॥

---

वृत्रगदाभिमृष्टः अभिहतः । अपासरत् तिर्यक् पृष्ठतो वा गतः ॥ ११ ॥

सन्नवाहाय विह्वलितवाहनाय पुनः गदां न प्रायुङ्क्त । अमृतस्राविणा करेण कृतेनाभिमर्शेन स्पर्शलक्षणेन वीतव्यथः वीता गता व्यथा यस्य सः । क्षतः वाहो यस्य स तथा ॥ १२ ॥

भ्रातृहणं विश्वरूपस्य हन्तारम् । अंहः पापरूपम् । मोहेन अज्ञानेन ॥ १३ ॥

ब्रह्महत्यादिकमेकं विश्वरूपमपेक्ष्योच्यते । अनृणो भ्रातृमरणप्राप्तर्णेन हीनः । दृषद्धृदा पाषाणवत्कठिनहृदयेन ॥ १४ ॥ स्वर्गकामो यजमानः । विस्रभ्य विश्वस्य ॥ १५ ॥

ह्रीश्रीदयाकीर्तिभिरुज्झितं रहितं समदन्तु भक्षयन्तु । अस्पृष्टवह्निमित्यनेन निःशेषनाशं सूचयति ॥ १६ ॥ त्वाऽनु त्वामनु ॥ १७ ॥

---

[1] इन्द्रोऽमृतस्यन्दिकराभिमर्शवीतव्यथक्षतवाहोऽभितस्थे इति स सम्मतः चेट्टीसम्मतश्च पाठः स्यात् । तथा हि तद्व्याख्यानम्—'अमृतस्यन्दिनौ यौ करौ ताभ्यामभिमर्शः स्पर्शस्तेन वीता गता व्यथा यस्य स चासौ प्राक् क्षतो वाहो हस्ती यस्य स तथाऽभितस्थे'—स । 'अमृतस्यन्यमृतस्रावी यः करस्तेनाभिमर्शः, तेन वीतव्यथो गतदुःखः क्षतवाहो यस्येन्द्रस्य स तथाभूतोऽभितस्थे अभिमुखेन स्थितवान्'—चेट्टी

अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्येह शिरो यदीह ।
तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥ १८ ॥

सुरेश कस्मान्न हिनोषि वज्रं पुरःस्थिते वैरिणि मय्यमोघम् ।
मा संशयिष्ठा भगदेव[1] वज्रं स्यान्निष्फलं कृपणार्थेव याच्ञा ॥ १९ ॥

नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः ।
तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः[2] ॥

अहं समाधाय मनो यथाऽऽह संकर्षणस्तच्चरणारविन्दे ।
त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २१ ॥

पुंसां किलैकान्तधियां स्वकानां याः संपदो दिवि भूमौ रसायाम् ।
न राति यस्माद् भयमुद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः ॥ २२ ॥

---

हरे इन्द्रः । इह युद्धे । तत्र तर्हि । इह अस्मिन् जन्मन्येव । मनस्विनां पूर्वं वीरस्वर्गं गतानां पादरजः प्रपत्स्ये तेषां लोकं गमिष्यामीत्यर्थः ॥ १८ ॥

हिनोषि मुञ्चसि । मा संशयिष्ठाः संशयं मा कार्षीः । भगानां भाग्यानां संपदां देव नाथ दातर्वा । अहल्याजारेति निन्दां वा सूचतति । प्रयुक्तं वज्रं नितरां फलतीति निष्फलं प्रयोजनवत् स्यात् । किन्तु कृपणार्था दरिद्रविषया याच्ञा व्यर्था भवति यथा तथा न स्यादित्यर्थः ॥ १९ ॥

हे शक्र य एष तव वज्रः हरेस्तेजसा दधीचेस्तपसा च तेजितो निशितः तेनैव शत्रुं मां जहीत्यन्वयः । विष्णुयन्त्रितो विष्णुवशः । यतो यत्र हरिस्ततस्तत्र विजयादिगुणाः स्युः ॥ २० ॥

वृत्रे सात्विकचेतनांशस्वभावं दर्शयितुमाह— अहमिति । सङ्कर्षणो भगवान् तत् मनस्समाधानं यथाऽऽह तथा मनस्तस्य सङ्कर्षणस्य चरणारविन्दे समाधाय । तव वज्रवेगेन लुलितः छिन्नो ग्राम्यपाशो विषयभोगलक्षणः पाशो यस्य स तथा । अपविद्धः परित्यक्तो लोको देहो येन स तथा । 'अस्माल्लोकात् प्रेत्य' इति श्रुतेः । परिभ्रष्टैतल्लोकस्थितिरिति वा । अहं मुनेर्ज्ञानिनो गतिं लोकं वैकुण्ठादिलक्षणं यामीत्यन्वयः । संन्यासलक्षणं वा ॥ २१ ॥

ननु परत्र सुखं वा दुःखं वा न निश्चितम्, तवात्र चाखण्डैश्वर्यं दरीदृश्यते । एतल्लोकत्यागे

---

[1] न गदेव इत्यपि स पाठः । प्राग् गदा यथा निष्फलाऽसीत् तथा वज्रमपि भविष्यतीति संशयं मा कुरु । दरिद्रं प्रति क्रियमाणधनप्रार्थनेव च न निष्फलं भवतीत्यर्थः ।

[2] विजयश्रीगुणास्ततः—च

त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ।
तेनानुमेयो भगवत्प्रसादो यो दुर्लभोऽकिञ्चनगोचरोऽन्यैः ॥ २३ ॥

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतात्मपतेर्गुणान् नो गृणीत वाक् कर्म करोतु कायः ॥ २४॥

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समञ्जसं त्वां विरहय्य कांक्षे ॥ २५ ॥

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेवाध्युषितं विषण्णं मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ २६ ॥

ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययाऽऽत्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ २७ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे एकादशोऽध्यायः ।

---

तदपि त्यक्तं स्यात्, तस्मात् तव शोको न स्यात् किमित्याशङ्क्य सर्वस्येश्वराधीनत्वेन तद्दत्तमेव स्थिरतरं नान्यत्, किञ्च स्वभक्तेभ्यः स्वर्गादिकमपि न ददाति किमुत ऐहिकम्, अतो न शोको ममेत्याशयेनाह—**पुंसामिति** । स लोकनाथः स्वर्गादौ याः सम्पदः सन्ति ताः स्वकानां पुंसां न राति किल । तासां सकाशात् भयादिकमुत्पद्यत इति यस्मात्, तस्मादिति शेषः ॥ २२ ॥

इतोऽपि हरेर्भक्तानुकम्पित्वं पश्येत्याशयेनाह—**त्रैवर्गिकेति** । अस्मत्पतिर्भगवान् । पुरुषस्य भक्तस्य । तेन धर्मार्थकामपरिश्रमनाशेन । 'यस्यानुग्रहमिच्छामि हरिष्ये तद्धनं शनैः' इत्यादेः ॥ २३ ॥

'अधुनाऽहं समाधाय मनः' इत्यत्र कथितमनःसमाधानप्रकारं निरूपयति—**अहमिति** । मनः आत्मपतेः आत्मपतिं स्मरेत । अधीगर्थदयेषां कर्मणीति षष्ठी । नो वाक् तद्गुणान् गृणीत । कायः कर्म प्रणामादि करोतु ॥ २४ ॥

मम वीरस्वर्गोऽपि वैकुण्ठादिरित्याशयेनाह—**न नाकपृष्ठमिति** । सार्वभौममित्यनेन भूमौ चक्रवर्तिपदमाह । योगसिद्धीः अणिमादिलक्षणाः । अपुनर्भवं पुनरुत्पत्तिमात्रशून्यत्वेन सुखपूर्त्यभावलक्षणं मोक्षम् । समञ्जसं वैषम्यनैर्घृण्यबुद्धिशून्यं विरहय्य विहाय ॥ २५ ॥

स्तन्यं स्तनच्युतं पयः । वत्सतरा अतिशयेन बालाः स्तनन्धयाः । प्रिया नवोढा भार्या । अध्युषितं प्रोषितम्, अन्यतः स्थितमित्यर्थः ॥ २६ ॥

श्रीहरिदर्शनसाधनमाह—**ममेति** । न भूयात्, सख्यमिति शेषः ॥ २७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां षष्ठस्कन्धे एकादशोऽध्यायः ॥

॥ अथ द्वादशोऽध्यायः ॥

ऋषिरुवाच[1]—

एवं जिहासुर्नृप देहमाजौ मृत्युं परं विजयं मन्यमानः ।
शूलं प्रगृह्याभ्यपतत् सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥ १ ॥

ततो युगान्ताग्निकठोरजिह्वमाविध्यशूलं तरसाऽसुरेन्द्रः ।
क्षिप्त्वा महेन्द्राय विनद्य धीरो हतोऽसि पापेति रुषा जगाद ॥ २ ॥

ख आपतन्तं ज्वलितं महोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः ।
ज्री वज्रेण वज्री शतपर्वणाऽच्छिनद् भुजं च तस्योरगभोगभोगम् ॥ ३ ॥

छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ।
हनौ तताडेन्द्रमथामरेशं वज्रश्च हस्तान्न्यपतन्मघोनः ॥ ४ ॥

वृत्रस्य कर्मातिमहाद्भुतं तत् सुरासुराश्चारणसिद्धसंघाः ।
अपूजयंस्तत् पुरुहूतसंकटं निरीक्ष्य हाहेति विचुक्रुशुर्भृशम् ॥ ५ ॥

इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः ।
तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥

---

॥ अथ द्वादशोऽध्यायः ॥

वृत्रवासवसंवादच्छलेन हरेः जीवेनाभेदज्ञानं तमस्साधनमित्येतन्निरूप्यतेऽस्मिन्नध्याये । वृत्रवासवयोर्युद्धशेषं वक्ति—एवं जिहासुरिति ।

विजयं विजयात्मकम् । परं मुख्यं मन्यमानः ॥ १–२ ॥

भोगवत् भोगः पुष्टिर्यस्य स तथा तम् । 'भोगः सुखे स्त्र्यादिभुक्तौ[2] पीनसर्पशरीरयोः ' इत्यभिधानात् । 'भोगो विषयसेवायामहिवर्ष्मणि पालने । वर्तुले स्थूलतायाञ्च जन्मन्यास्वादने तथा ' इति वररुचिः ॥ ३ ॥

'इन इन्द्रः परिवृढः पतिरध्यक्षवल्लभौ ' इत्यतः स्वामिमात्रेपीन्द्रशब्दप्रयोगात् ततो विशिष्योक्तम् —अमरेशमिति ॥ ४-५ ॥

हर स्वशत्रुम्, मामिति शेषः ॥ ६ ॥

---

[1] श्रीशुक उवाच—प्र

[2] स्त्र्यादिभृतौ—च

युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै पराजयः ।
विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥

लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे ।
द्विजा इव शिचा बद्धाः स काल इह कारणम् ॥ ८ ॥

ओजः सहो बलं प्राणममृतं मृत्युमेव च ।
तमज्ञाय जनो हेतुमात्मानं मन्यते जडः ॥ ९ ॥

यथा दारुमयी नारी यथा यन्त्रमयो मृगः ।
एवं भूतानि मघवन् ईशतन्त्राणि विद्धि भोः ॥ १० ॥

---

ननु हनने तव पराजय इत्याशङ्क्य पराजयापराजयौ न नियतौ किन्तु दैवकृतावित्याह—युयुत्सतामिति। युयुत्सतां युद्धशीलानां मध्ये कुत्रचिद् युद्धे देवप्रकृतेरेकस्य सदा जय इतरस्य सदा पराजय इति नियमो नैव इत्यन्वयः । तर्हि कस्य सदा जय इति तत्राह—**विनेति** । तत्राभिभविनस्तव स्थितावपि देहवियोगलक्षणो लयः प्रतिक्षणमस्तीति दर्शयितुमुत्पत्त्यनन्तरं लयपदोपादानम् ॥ ७ ॥

हरेरेव सदा जय इत्ययं नियमः कुत इति तत्राह—**लोका इति** । यस्य वशे स्थिताः श्वसन्ति । श्वस प्राणन इति धातुः । सत्ताऽपि तदधीनेति विज्ञायते । शिचा जाललक्षणतन्त्या । द्विजाः पक्षिणः । खगा इत्युक्तिं विना विदुषामपि वाक्तन्त्या नियतत्वमस्तीति द्योतनाय द्विजा इत्युक्तम् । इह जीवराशौ स्थितयोर्जयपराजययोः कारणम् ॥ ८ ॥

ओजआद्याधिक्यानाधिक्ये [1]उभयोर्हेतुत्वेन सिद्धे । हरेरधीनत्वं कुतः सिद्धमिति तत्राह—**ओज इति** । जडो जन ओजस्त्वादिगुणमूर्तिमन्तं भगवन्तमज्ञाय तयोर्हेतुमात्मानं स्वं मन्यत इत्यन्वयः । 'स वै बलं बलिनाञ्चापरेषां' इति स्वोक्तेः ओजःसहादिषु स्थित्वोजस्त्वादिगुणप्रवर्तकोऽयमित्यजानन् जनो जड इत्युच्यते । ओजस्त्वादिहेतुमिति वा[2] ॥ ९ ॥

हिरण्यगर्भादीनां ओजआदिगुणसृष्टिहेतुत्वेन सत्वाज्जयपराजययोरपि तन्नियतत्वे किमपराद्धमिति तत्राह—**पुरुष इति** । 'हिरण्यगर्भः पुरुष आत्मा वायुरुदाहृतः । शेषोऽव्यक्तस्तथैवेन्द्र आशयस्समुदाहृतः' इत्यतः पुरुषादिशब्देन न संसार्यादिसामान्यवस्तूनि गृह्यन्ते । किन्तु विशिष्ट एव चेतन इत्येवं शास्त्रनिर्णये सति हिरण्यगर्भादयो यदनुग्रहं विनाऽस्य जगतः सर्गादौ न शक्नुवन्ति, तमात्मानमन्तःस्थित्वाऽऽदानादिकर्तारं श्रीहरिमनीशं जीवं मन्यते । व्याहतमिदमित्याह— **ईश्वरमिति** ।

---

[1] जयपराजययोरित्यर्थः ।   [2] स च जड आत्मानमोजस्त्वादिहेतुं मन्यत इति यावत् ।

पुरुषः प्रकृतिर्व्यक्तमात्मभूतेन्द्रियाशयाः ।
शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहम् ।
अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ॥ ११ ॥

भूतैः सृजति भूतानि ग्रसते तानि वै स्वयम् ॥ १२ ॥

आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ।
भवन्त्येव हि ते काले यथाऽनिच्छोर्विपर्ययाः ॥ १३ ॥

तस्मादकीर्तियशसोर्जयापजययोरपि ।
समः स्यात् सुखदुःखाभ्यां मृत्युजीवितयोस्तथा[1] ॥ १४ ॥

सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
तत्र साक्षिणमात्मानं यो वेद न स बध्यते ॥ १५ ॥

पश्य मां निर्जितं शक्र वृकणायुधभुजं मृधे ।
घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥ १६ ॥

---

कोऽसाविति तत्राह—अविद्वानेवेति । अज्ञानादेवं मन्वानस्य निरय एवावस्थानं नान्यत्रेत्यस्मिन्नर्थे एवशब्दः[2] । 'अनीशं जीवरूपेण[3] परमात्मानमीश्वरम् । ये मन्यन्ते तान् समीक्ष्य स्नेहान्निरयरभाग् भवेत्' इति वचनात् ॥ ११ ॥

ननु तत्स्रष्टृत्वे ब्रह्मा स्रष्टेत्यादिरूढिः कथमिति तत्राह—भूतैरिति ॥ १२ ॥

दैनन्दिनसृष्टिसंहारावपि तदधीनावित्याह—आयुरिति । पुरुषस्योत्पन्नस्य या आयुराद्याशिषो भवन्ति ते भावाः काले कालात्मनो हरेराराधनोपयोगाय न भवन्ति हि यस्मात् तस्मादकीर्त्यादेः समः स्यादित्यन्वयः[4] । यथा दुःखाद्यनुभवेच्छारहितस्यापि विपर्यया दुःखादिलक्षणा दृश्यन्ते तथेति शेषः । अनेन सर्वे भावाः नारायणाधीना इति निरणायि ॥ १३–१४ ॥

दुःखाद्यागमे प्रकृतिपुरुषविवेकाज्ञानं कारणमित्याह—सत्वमिति । आत्मनः जीवस्य । आत्मानं परमात्मानम् ॥ १५ ॥ श्रीहर्यधीनत्वेन जयादिकं तवापि प्रत्यक्षमित्याह—पश्येति ॥ १३ ॥

---

[1] यस्मादेवं सर्वमीश्वराधीनं तस्मात् समः स्यात् हर्षविषादहीनो भवेत्—चेट्टी

[2] एतद्वाक्यानुरोधेन, अविद्वानेवेति प्रतीकग्रहणेन च अविद्वानेव चात्मानमिति विजयध्वजपाठः संभाव्यते ।

[3] अनीशजीवरूपेण—ट [4] अस्पष्टमिदम् ।

प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः ।
अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥ १७ ॥

श्रीशुक उवाच —

इन्द्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत् ।
गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः ॥ १८ ॥

इन्द्र उवाच —

अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी ।
भक्तः सर्वात्मनाऽऽत्मानं सुहृदं जगदीश्वरम् ॥ १९ ॥
भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम् ।
यद् विहायासुरं भावं महापुरुषतां गतः ॥ २० ॥
खल्विदं महदाश्चर्यं यद् रजःप्रकृतेस्तव ।
वासुदेवे भगवति सर्वात्मनि दृढा मतिः ॥ २१ ॥
यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे ।
विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥ २२ ॥

श्रीशुक उवाच —

इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप ।
युयुधाते महावीर्याविन्द्रवृत्रौ युधाम्पती ॥ २३ ॥

---

प्राण एव ग्लहः पणो यस्य स तथा । इषवः शरा एव अक्षाः यस्य स तथा । हस्त्यादिवाहनान्यासनं फलकलक्षणं यस्य स तथा । द्यूतकल्पः संग्रामः । अत्र द्यूतलक्षणे समरे ॥ १७ ॥

गतालीकं निर्व्याजम् ॥ १८ ॥

सिद्धः जीवन्मुक्तः । 'जीवन्मुक्ते जातिभेदे सिद्धः स्यात् साधितेऽपि च' इति । आत्मानं श्रीहरिम् । भक्तः भजमानः ॥ १९ ॥

महापुरुषतां भक्तिज्ञानादिगुणसंपन्नत्वेन महत्त्वम् ॥ २० ॥

खातकोदकैः कूपतटाकादिजलैः तत्प्रायैः स्वर्गादिभिः ॥ २२ ॥

धर्मजिज्ञासया धर्मविचारेण युक्तौ । युध्यन्तीति युधो योधाः तेषां पती । युध संप्रहार इति धातुः । अनपुंसकाद्युगपदे क्विप् प्रत्ययः पुंशब्दवत् ॥ २३ ॥

आविध्य परिघं वृत्रः कार्ष्णायसमरिन्दम ।
इन्द्राय प्राहिणोद् घोरं वामहस्तेन मारिष ॥ २४ ॥

स तु वृत्रस्य परिघं करं च करभोपमम् ।
चिच्छेद युगपद् देवो वज्रेण शतपर्वणा ॥ २५ ॥

दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः ।
छिन्नपक्षो यथा गोत्रः खाद् भ्रष्टो वज्रिणा हतः ॥ २६ ॥

कृत्वाऽधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम् ।
नभोगम्भीरवक्त्रेण लिलेहोल्बणजिह्वया ॥ २७ ॥

दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम् ।
अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन् ॥ २८ ॥

गिरिराट् पादचारीव पद्भ्यां निर्दरयन् महीम् ।
जग्रास तं समासाद्य वज्रिणं सह वाहनम् ।
महाप्राणो महावीर्यो महासर्प इव द्विपम् ॥ २९ ॥

वृत्रग्रस्तं तमालक्ष्य सप्रजापतयः सुराः ।
हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः ॥ ३० ॥

निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः ।
महापुरुषसन्नद्धो योगमायाबलेन च ॥ ३१ ॥

भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद् विभुः ।
उच्चकर्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा ॥ ३२ ॥

---

'कनिष्ठिकाधः करभः करिपोतेऽपि तत्करे' इत्यभिधानादत्र करभशब्दस्य युक्तोऽर्थो ग्राह्यः ॥ २५ ॥ गोत्रः पर्वतः भ्रष्टो भ्रंशितः । भ्रंशु अधःपतने इति धातोः ॥ २६ ॥

लिलेह, नभ इति शेषः ॥ १७ ॥ कालकल्पाभिः यमसदृशीभिः ॥ २८ ॥

महापुरुषेण भगवता सन्नद्धः सहितो रक्षित इति यावत् । नारायणकवचाख्यविद्यया समुद्धतो वा । योगमायाबळेन अणिमादिमहिमाबळेन, उपायलक्षणमायाबलेन वा ॥ ३१ ॥

अकृत्रिमो वेगो यस्य स तथा । योऽयमहर्गण आदित्यादिज्योतिषामयने दक्षिणोत्तरायणसंज्ञे संवत्सरे संभवति तावताहर्गणेन षष्ट्युत्तरशतत्रयलक्षणेन । वार्त्रहत्ये वृत्रहननसंबन्धिनि समरे काले वा । तावत्-

वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन् समन्तात् परिवर्तमानः ।
न्यपातयत् तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥ ३३ ॥

तदा च खे दुन्दुभयो विनेदुर्गन्धर्वविद्याधरमहर्षिसिद्धाः ।
वार्त्रघ्नलिङ्गैस्तमभिष्टुवाना मन्त्रैर्मुदा कुसुमैरभ्यवर्षन् ॥ ३४ ॥

वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम ।
पश्यतां सर्वलोकानां स्वलोकं समपद्यत ॥ ३५ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे द्वादशोऽध्यायः ।

---

काले समन्तात् कृन्तन् परिवर्तमानो भ्रमन् वज्रस्तं न्यपातयदित्यन्वयः । अत्रेतिहासं पठन्ति । प्रथमं युद्धं नर्मदातीरे । द्वितीयं तु समुद्रतीरे । तत्र वृत्रेण केनचित् संकेतेन संधित इन्द्रः सख्यं प्राप्तस्य तस्य स्निग्धतया करं प्रगृह्य फेनेनास्य वधं कर्तुं विचरन् फेनेन मां जहीति विनोदवचनं वृत्रेण वादयित्वा तेन पादस्पर्शलक्षणं ताडनं[1] कृत्वा युद्धाय सन्नद्धः एकसंवत्सरकालं युद्धं कृत्वा विष्णुशक्तियुक्तं वज्रं फेने निवेश्य तस्मै विसृज्य श्रीनारायणं ध्यायतस्तस्य शिरः प्रजहार । 'सन्धितः समयेनेन्द्रो वृत्रेणाथो करग्रहः[2] । समुद्रतीरे विचरन् फेनेन वधमस्य तु । नर्मणा जहि फेनेन[3] वादयित्वा सुरेश्वरः । पादस्पर्शविवादं च कृत्वा युद्धाय दंशितः । फेने वज्रं समावेश्य विष्णुयुक्तं व्यसर्जयत् । अपानुदच्छिरस्तस्य ध्यायतो वत्सरेण सः' इति वाक्यमत्र मानम् । करं गृह्णातीति करग्रहः[4] ॥ ३३ ॥

वृत्रघ्नस्य इन्द्रस्य संबन्धीनि लिङ्गानि लक्षणानि स्तंभितजलनिर्गमनादीनि तानि येषु मन्त्रेषु उच्यन्ते ते वार्त्रघ्नलिङ्गास्तैर्मन्त्रैः । 'दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पाणिनेव गावः । अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद् ववार' इत्यादिलक्षणैः ॥ ३४ ॥

आत्मज्योतिर्जीवास्यतेजः । स्वलोकं स्वेनाधिकृतं विद्याधरलोकम् ॥ ३५ ॥

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे द्वादशोऽध्यायः ।

---

[1] विवादमिति स्यात् । [2] अनेन वृत्रकरप्ररोहः सूच्यते । करेणगृह्णातीति करग्रहो वा—स.
[3] फेना फेनेन, तृतीयाया इनादेशाभावश्छान्दसः । [4] तात्पर्यवचनव्याख्यानमिदम् ।

॥ अथ त्रयोदशोऽध्यायः ॥

श्रीशुक उवाच —

वृत्रे हते त्रयो लोका विना शक्रेण भूरिद ।
सपाला ह्यभवन् सद्यो विज्वरा निर्वृतेन्द्रियाः ॥ १ ॥

देवर्षिपितृभूतानि दैत्यदेवानुगाश्च ये ।
प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेन्द्रादयस्ततः ॥ २ ॥

राजोवाच —

इन्द्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने ।
येनासन् सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ॥ ३ ॥

श्रीशुक उवाच —

वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः ।
तद्वधायार्थयन्निन्द्रं नैच्छद् भीतो बृहद्वधात् ॥ ४ ॥

इन्द्र उवाच —

भूस्त्रीजलद्रुमैरेनो विश्वरूपवधोद्भवम् ।
विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क्व मार्ज्म्यहम् ॥ ५ ॥

---

अश्वमेधादिकर्म ज्ञानप्रतिबन्धकदुष्कर्मपरिहारत्वेन तत्साधनमित्येतदस्मिन्नध्याये प्रतिपाद्यते । भूरिद बहुप्रद । स्वर्णप्रदेति वा । 'भूरि स्वर्णं हिरण्यञ्च पुरटं निष्कहेमनि' इत्यभिधानाद्धिरण्यादिद्रव्यप्रद ॥ १ ॥ ततः समुद्रतीरात् ॥ २ ॥

हरेरिन्द्रस्य । 'अर्कमर्कटामण्डूकविष्णुवासववायवः । तुरङ्गसिंहशीतांशुयमाश्च हरयो दश ।' इत्यभिधानात् ॥ ३ ॥

[1]अर्थयन्नित्युभयपदी । अर्थप्रातिपदिकात् कृदन्तात् 'तत्करोति' इति णिचि कृते रूपं साधु[2] । 'अर्थः स्याद् विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने' इति यादवः[4] । बृहद्वधात् ब्राह्मणवधात् ॥ ४ ॥

एनो ब्रह्महत्यापापम् । मार्ज्मि संशोध्य परिहरामि ॥ ५ ॥

---

[1] आर्थयन् इति छेदः—स    [2,3-4] अत्र लिपिकृत्प्रमादः संभाव्यते ।

श्रीशुक उवाच —

ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रुवन् ।
मार्जयिष्याम[1] भद्रं ते हयमेधेन मा स्म भैः ॥ ६ ॥

हयमेधेन पुरुषं परमात्मानमीश्वरम् ।
इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ॥ ७ ॥

ब्रह्महा पितृहा गोघ्नो मातृहाऽऽचार्यहाऽघवान् ।
श्वादः पुल्कसको वाऽपि शुध्येरन् यस्य कीर्तनात् ॥ ८ ॥

तमश्वमेधेन महामखेन श्रद्धान्वितोऽस्माभिरनुष्ठितेन ।
हत्वाऽपि सब्रह्म चराचरं त्वं न लिप्यसे किं खलनिग्रहेण ॥

श्रीशुक उवाच —

एवं सञ्चोदितो विप्रैर्मरुत्वानहनद् रिपुम् ।
ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥

तयेन्द्रः स्म ह सन्तप्तं निर्वृतिर्नामुमाविशत् ।
ह्रीमन्तं हत्यया तप्तं[2] सुखयन्त्यपि नो गुणाः ॥ ११ ॥

---

मा स्म भैः भयं मा कार्षीः स्म ॥ ६ ॥

यन्नामसङ्कीर्तनादेते शुद्धा भवन्ति किं वक्तव्यं तद्यजनेनेति भावेनाह— **ब्रह्मेति** ॥ ८ ॥

**सब्रह्मेति** चराचरात् पृथग् ग्रहणं ब्रह्महननस्य दोषाधिक्यसूचनाय ॥ ९ ॥

**वृषाकपिरिन्द्रः** । 'वृषाकपिर्हरे शक्रे हरीतक्यां जनार्दने' इत्यभिधानम् ॥ १० ॥

**स्म हेत्येतौ** ब्रह्मवधस्य लोके जुगुप्सितत्वेन स्मृतावपि नात्र तथेतीममर्थं सूचयतः । सर्वस्य सुखस्य हेतुत्वात् । तर्हि किमर्थमस्य निर्वृतिर्नाभूत् सुखहेतूनां शौर्यादिगुणानामुन्मीलितत्वाच्छत्रुहननेनेति तत्राह— **ह्रीमन्तमिति** । यद्यपि शत्रुवधसूचकशौर्यादिगुणाः सुखहेतवः । तथाऽपि ते ब्रह्महत्यया तप्तं नो सुखयन्ति । कुतः ? लज्जाकरत्वात् । किञ्च इन्द्रादिदेवानां तदानीन्तनं कर्म प्रारब्धकर्मणा प्राप्तदुःखस्य सूचकं न त्वन्येषाम् । स्थितप्रज्ञत्वेन क्वापि प्रारब्धमपि फलदातृ न भवेत् । 'प्रारब्धकर्मणैवैषां क्लृप्तदुःखस्य सूचकम् । तदानीन्तनकर्म स्याद् व्रणहेतुर्यथा रणः । देवादीनां स्थितप्रज्ञभावान्नैवान्यथा भवेत् । प्रारब्धमपि तु क्वापि किञ्चिद् विघटितं भवेत्' इति ॥ ११ ॥

---

[1] याजयिष्याम—च  [2] ह्रीमन्तं वाच्यतां प्राप्तम्—स

तां ददर्शानुधावन्तीं चण्डालीमिव रूपिणीम् ।
जरया वेपमानाङ्गीं यक्ष्मग्रस्तामसृक्पटाम् ॥ १२ ॥
विकीर्य पलितान् केशांस्तिष्ठ तिष्ठेति भाषिणीम् ।
मीनगन्ध्यसुगन्धेन कुर्वतीं मार्गदूषणम् ॥ १३ ॥
नभोगतो दिशः सर्वाः सहस्राक्षो विशाम्पते ।
प्रागुदीचीं दिशं दृष्ट्वा प्रविष्टो नृप मानसम् ॥ १४ ॥
स आवसत् पुष्करनालतन्तूनलब्धभोगो यदिहाग्निदूतः ।
वर्षाणि साहस्रमलक्षितोऽन्तः सञ्चिन्तयन् ब्रह्मवधाद् विमोक्षम् ॥
तावत् त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः ।
स सम्पदैश्वर्यमदान्धबुद्धिर्नीतस्तिरश्चां गतिमिन्द्रपत्न्या ॥ १६ ॥
ततो गतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारितांहः ।
पापश्च दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या ॥ १७ ॥

---

असृक्पटां रक्तरञ्जितपटां रजस्वलामिव ॥ १२ ॥

मीनगन्धिनः क्षीणमीनधारिणो चण्डाला दाशादयो वा, तेषां यो दुर्गन्धस्तादृशेनासुगन्धेनासुरभिणा ॥ १३ ॥

ततः सहस्राक्षस्तां परिहर्तुं सर्वा दिशो गत्वा [1]विहायसा नभोगतः समर्थयेक्षया प्रागुदीचीं दिशं दृष्ट्वा तां प्रविष्टो मानसं नाम सरः प्रापेत्यन्वयः ॥ १४ ॥

तन्तूनावसत् इति 'उपान्वध्याङ्वसः' इति सप्तम्यर्थे द्वितीया । अग्निर्दूतो यस्य सोऽग्निदूतः ॥ १५ ॥

यावदिन्द्रः सरसि पुष्करनालतन्तुष्ववसत् तावन्नहुषस्त्रिणाकं स्वर्गं, भूम्यन्तरिक्षस्वर्गस्थानं वा, शशासेत्यन्वयः । अत एव त्रैलोक्यपालनलब्धसर्वैश्वर्यभोगरहितः ब्रह्मवधादुत्पन्नदोषमोक्षम् । तावच्च नाकमिति केचित् पठन्ति । अत्र चशब्द एवार्थे, नहुष इत्यनेन सम्बध्यते । अन्ययोगव्यवच्छेदार्थः । तिरश्चां गतिम् अजागरीं स्थितिम् ॥ १६ ॥

'उपहूत ऋतम्भर' इति पाठः । ब्रह्मगिरा विरिञ्चिवाक्येनोपहूतः बृहस्पतिवाक्येन वा । अम्याख्यदूतमुखेनेत्यर्थः । ततः मानससरसः ऋतम्भरस्य सत्यपालकस्य नृसिंहस्य ध्यानेन निवारित-

---

[1] विहायसा इति पदमधिकमिति भाति । अथवा सहस्राक्षो विहायसा इति वि. पाठः । समर्थयेक्षयेत्यर्थकथनम् ।

तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत ।
यथावद् दीक्षयाञ्चक्रुः पुरुषाराधनेन हि ॥ १८ ॥
अथेज्यमाने पुरुषे सर्वभूतमयात्मनि[1] ।
अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिभिः ॥ १९ ॥
स वै त्वाष्ट्रवधो भूयानपि पापः परन्तप ।
नीतस्तेनैव शून्याय नीहार इव भानुना ॥ २० ॥

---

मंहो येन स तथा । सर्वगतः श्रीनारायण इति प्रह्लादोक्तवचनं सत्यं कर्तुं स्तम्भादाविरभूदिति यदतो हरिः ऋतम्भर इति देवादिभिरुपहूतत्वाद्धरेस्तन्नाम । नन्विदानीमृतम्भरध्यानेन निरस्ताघश्चेत् पूर्वं तेनाभिभूत इन्द्रः किम् ? तत्राह—पापश्चेति । पापो ब्रह्महत्यालक्षणो जीवश्च तमिन्द्रं नाभ्यभूदभिभूतं नाकारोदित्यन्वयः । अत्र हेतुगर्भविशेषणमाह—दिग्देवतयेति[2] । इन्द्रहितकारिण्या दिग्देवतया हतमोजो बलं यस्य इन्द्रमन्विष्य सर्वदिक्षु भ्रमतः स तथा । कस्मात् ? गङ्गाजलपरिप्लुतमानससरसि प्रविष्टत्वेन विष्णुपत्न्याऽवितं रक्षितं तस्माच्चेति ॥ १७ ॥

ऋतम्भरध्यानादिनाऽभिभवाभावे तदभिभवः[3] स्यात्, स्वरूपतो नाशाभावादिति तत्राह—तमिति । भगवद्विषयेणाश्वमेधेन स्वरूपनाशश्च कथं स्यादित्यत उक्तम् – पुरुषेति । अत्र पुरुषशब्देन विष्णुरुच्यते । 'सहस्रशीर्षा पुरुषः' इति श्रुतेः । हेत्यनेन श्रीहरिमाहात्म्यज्ञानपूर्वकं तत्करणाभावे न तत्फलं स्यादिति विपक्षे बाधकं सूचयति । 'अहं हि सर्वयज्ञानां भोक्ता' इति स्मृतेः ॥ १८ ॥

यत एवं साङ्गो यज्ञोऽथ तस्मान्महानपि त्वाष्ट्रवधस्तेन यज्ञेन शून्याय नीत एव सर्वात्मना नष्टोऽभूत् । क्रियाया विशिष्टत्वादित्यन्वयः । कथं विशिष्टत्वम् इत्यतस्तात्पर्यादुक्तमेव विशिनष्टि—इज्यमानेति । ब्रह्मवादिभिर्वितते विस्तृते अश्वमेधे यज्ञे इन्द्रेण सर्वभूतानां प्रधानश्चान्तर्यामी च सर्वभूतमयात्मा तस्मिन् यज्ञपुरुषे इज्यमाने 'सर्वदेवमयात्मनि' इति पाठे स एवार्थः । वा इत्यनेन 'ज्ञानाग्निः सर्वकर्माणि' इति वचनाद् भगवतो ज्ञानेन सर्वात्मना पापस्य नाशोऽश्वमेधेनेन्द्रस्य महत्त्वातिशयो भवतीति सूचयति ॥ १९–२० ॥

---

[1] सर्वदेवमयात्मनि—वि [2] दिग्देवतया रमारूपिण्या । दिशां वत्सं त्रैन्द्रत्यत्र छान्दोग्ये भाष्योक्तदिशा दिक्शब्दवाच्यबाहुयुक्ता देवता विष्णुस्तेनेति वा—स. [3] तदनभिभव इति स्याद् ।

स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ।
इष्ट्वाऽपि यज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥ २१ ॥

इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम् ।
भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेन्द्रमोक्षं विजयं मरुत्वतः ॥ २२ ॥

पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणि पर्वणीन्द्रियम् ।
धन्यं यशस्यं निखिलाघमोचनं रिपुञ्जयं स्वस्त्ययनं तथाऽऽयुषम् ॥

इति श्रीमद्भागवते षष्ठस्कन्धे त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

**परीक्षिदुवाच**[1] —

रजस्तमस्स्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः ।
नारायणे भगवति कथमासीद् दृढा रतिः ॥ १ ॥

---

तत् कुतोऽवगम्यत इत्यत्राह—स वाजीति । मरीचिमिश्रैर्मरीचिमुख्यैः । ज्ञानविधूतपापोऽपि[2] इष्ट्वा महानासेत्यर्थः ॥ २१ ॥

नेदमिन्द्रेण स्वार्थतयाऽनुष्ठितम् । किन्तु लोकोपकारकत्वेन । यतोऽस्येन्द्रस्य पापमेकं नष्टम् । तच्चरितस्य श्रवणादिना (लोकस्य) सर्वाभीष्टानि सिध्यन्तीति तत् स्तौति— **इदमिति**। तीर्थपदस्य हरेरनुकीर्तनं यस्मिंस्तत् तथा ॥ २२ ॥

इन्द्रियमिन्द्रियाणां शक्तिप्रदम् । इन्द्रसंबन्धि वा । किंविषयमाख्यानमित्यतो वेत्युक्तम् ॥२३॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

अत्र चित्रकेतुविषयेतिहासश्रवणादिना संसारविरक्तिभूयिष्ठतया श्रीनारायणचरणारविन्दे भक्तिर्जायत इति तदर्थं परीक्षित्प्रश्नपूर्वकं पूर्वकथाशेषत्वेन निरूपयितुमाह— **रज इति** । दृढा रतिः निरतिशयभक्तिरित्यर्थः[3] ॥ १ ॥

---

[1] राजोवाच—प्र [2] मरीचिमिश्रैर्मरीचिमुख्यैः इज्यमाने सति ज्ञानविधूतपाप इत्यर्थः—ब
[3] निश्चला भक्तिः—स

देवानां शुद्धसत्वानामृषीणां चामलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥ २ ॥

रजोभिस्समसंख्याताः पार्थिवैरिह जन्तवः ।
तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥ ३ ॥

प्रायो मुमुक्षवस्तेषां केचनेह द्विजोत्तमाः ।
मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति ॥ ४ ॥

---

देवादीनामपि श्रीकान्ताङ्घ्रिभक्तिर्दुर्लभा किमुतासुरप्रकृतेरिति भावेन वक्ति-- **देवानामिति** । शुद्धसत्वगुणनिर्मितशरीरत्वेन शुद्धान्तःकरणानाम् । अमलात्मनां तपोभिर्निर्धूतमनोमलानाम् । न प्रायेणोपजायते । तस्यायमर्थः[1]— निरन्तरभक्तिकरणयोग्यैरसुरावेशात् क्रियमाणस्य द्वेषस्य कादाचित्कत्वेनाल्पत्वेऽपि महत्त्वोपचारः । अन्यथा शुद्धसत्वानामित्यादिविशेषणविशिष्टानां, 'देवानां गुणलिङ्गानाम्[2]' इत्यादिनोच्यमानमात्यन्तिकभक्तिलक्षणं चासङ्गतं स्यात् । अतः प्रायशब्दस्य बाहुल्यार्थत्वेऽप्यत्राल्प एवार्थोऽङ्गीकर्तव्यः । प्रभूतप्रमाणानुरोधात् । भक्तिकरणं दुर्लभमित्यतो वा तथोक्तम् । न तु तेषां भक्तिबाहुल्यस्यादृष्टत्वात् । भक्तेस्तारतम्यप्रदर्शनाय वा[3] ॥ २ ॥

एतदेवाह— **रजोभिरिति**[4] । इह कर्मभूमौ जन्तवः पार्थिवैः रजोभिरसमसंख्याताः यावन्ति भूमेः रजांसि सन्ति तावन्तः शरीरिणो जीवाः सन्ति । अन्येऽपि निश्शरीरा अनन्ताः सन्ति । 'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः' इति श्रुतेः[5] । न तेषामिह मानं क्रियते । किन्तु गृहीतदेहानामेव । तेषां मध्ये ये केचन मनुजादयः श्रेयः स्वर्गादिलक्षणमुद्दिश्य प्रवर्तन्ते । वा इत्यनेन 'मनुष्याणां सहस्रेषु' इत्यादिवाक्यं सूचयति । ईहमानेष्वपि विशेषं वा ॥ ३ ॥

स्वर्गादीनां क्षणभंगुरदुःखपरत्वं संदिश्य चेष्टमानानां मध्ये केचिदेव मुमुक्षवः मोक्षेच्छवः । तेषां, मुमुक्षूणां मध्ये केचिदेव प्रयतन्ते । तेषु प्रयतमानेषु सहस्रेषु कश्चित् अधिकारिराशिषु मुच्येत संसा-

---

[1] न प्रायेणोपजायत इत्यस्यायमर्थः—च [2] भगवतम्—३-२६-३२

[3] अस्पष्टमिदं वाक्यजातम् ।

शुद्धप्रकृतीनां निर्दुष्टमनसां देवानां ऋषीणां (च) मुकुन्दचरणे प्रायेण बाहुल्येन, भूयसीति यावत्, रतिर्नोपजायते । सा एतस्य कथमभूत् ?—स.

एतादृशानामपि देवानां ऋषीणां च मुकुन्दचरणे भक्तिः नारायणपरायणत्वं नोपजायते । ब्रह्मादीनां केषाञ्चि न्नारायणपरायणत्वात् तद्व्यावृत्यर्थं प्रायेणेति —चेट्टी

[4] नारायणपरायणत्वाभावेऽपि नारायणायनत्वं भविष्यतीत्याशंक्य नारायणपरायणत्ववत् तदपि दुर्लभमित्याह—रजोभिरिति त्रिभिः—चेट्टी [5] स्कान्दवचनमिदमिति विष्णुतत्वविनिर्णये ।

मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ ५ ॥

वृत्रस्तु स कथं पापः सर्वलोकोपतापनः ।
इत्थं दृढमतिः कृष्ण आसीत् संग्राम उल्बणे ॥ ६ ॥

अत्र नः संशयो भूयान् श्रोतुं कौतूहलं प्रभो ।
यः पौरुषेण समरे सहस्राक्षमतोषयत् ॥ ७ ॥

सूत उवाच —

परीक्षितोऽथ संप्रश्नं भगवान् बादरायणिः ।
निशम्य श्रद्धधानस्य प्रतिनन्द्य वचोऽब्रवीत् ॥ ८ ॥

श्रीशुक उवाच —

शृणुष्वावहितो राजन्नितिहासं पुरातनम् ।
श्रुतं द्वैपायनमुखान्नारदाद् देवलादपि ॥ ९ ॥

आसीद् राजा सार्वभौमः शूरसेनेषु वै नृप ।
चित्रकेतुरिति ख्यातो यस्यासीत् कामधुङ् मही ॥ १० ॥

---

रान्मुक्तो भवति । तत्रापि संसारान्मुक्तेष्वपि संसाराद्यप्राप्तिज्ञानादिपूर्तिशून्यमुक्तराशौ कश्चिदेव पूर्ण-ज्ञानी सिध्यति आनन्दादिपूर्णो भवति' ॥ ४ ॥

सिद्धानामानन्दादिपूर्णानां मुक्तानां मध्ये नारायणायनो दुर्लभः । नारायणायनानां कोटिष्वपि प्रशान्तात्मा प्रकृष्टभगवन्निष्ठायुक्तमनाः प्रकृष्टानन्दरूपो वा नारायणपरायणः सुदुर्लभ इत्यर्थः । अधि-कारिणां तारतम्यविवक्षयैतद्वचनम् ॥ ५ ॥

ततः किं प्रकृत इति तत्राह—वृत्रस्त्विति । तुशब्देनात्यन्तानुपपत्तिं सूचयति ॥ ६ ॥

पौरुषेण परमात्मविषयस्नेहेन । 'अहो दानव सिद्धोऽसि' इत्युक्तत्वात् ॥ ७ ॥

---

[1] अस्पष्टमिदम् —

प्रायो मुमुक्षव इत्यत्र स आत्मा तत्त्वमसीत्यत्रेवाकारप्रश्लेषेणापि पदच्छेदोऽभिप्रेतः । मुमुक्षुशब्देन चापरोक्ष-ज्ञानित्वलक्षणजीवन्मुक्तीच्छा विवक्षिता । ततश्चायमर्थः तेषां मनुजादीनां मध्येऽमुमुक्षवः प्रायो बाहुल्येन । मुमुक्षवस्तु केचनैव । मनुजानां प्रायः प्रवृत्तिधर्मरुचित्वादिति भावः । मुमुक्षूणां जीवन्मुक्तीच्छूनां सहस्रेषु केचिदेव प्रयतन्ते । प्रयतमानेष्वपीति वाक्यशेषः । कश्चिदेव मुच्यते जीवन्मुक्तो भवति—चेट्टी

तस्य भार्यासहस्राणां सहस्राणि दशाभवन् ।
सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम् ॥ ११ ॥

रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ।
सम्पन्नस्य गुणैस्सर्वैश्चिन्ता वन्ध्यापतेरभूत् ॥ १२ ॥

[1]न तस्य सम्पदः सर्वा महिष्यो वामलोचनाः ।
सार्वभौमस्य भूश्चेयं नाभूवन् प्रीतिहेतवः ॥ १३ ॥

तस्यैकदा तु भवनमङ्गिरा भगवान् ऋषिः ।
लोकाननुचरन्नेतानुपागच्छद् यदृच्छया ॥ १४ ॥

तं पूजयित्वा विधिवत् प्रत्युत्थानार्हणादिभिः ।
कृतातिथ्यमुपासीदत् सुखासीनं समाहितः ॥ १५ ॥

महर्षिस्तमुपासीनं प्रश्रयावनतं क्षितौ ।
प्रतिपूज्य महाराज समाभाष्येदमब्रवीत् ॥ १६ ॥

अङ्गीरा उवाच —

अपि तेऽनामयं स्वस्ति प्रकृतीनां तथाऽऽत्मनः ।
यथा प्रकृतिभिर्गुप्तः पुमान् राजा च सप्तभिः ॥ १७ ॥

आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् ।
राज्ञस्तथा प्रकृतयो नरदेवाहितादयः ॥ १८ ॥

---

सान्तानिकः सन्तानार्थी । कस्यामपीति शेषः ॥ ११ ॥ क्षितावुपासीनम् ॥ १६ ॥

ते तवानामयमपि ? दुःखं नास्ति हि ? तथाऽऽत्मनस्तव प्रकृतीनां स्वस्ति किमित्यन्वयः । प्रकृतिविषयकुशलप्रश्नेन किं प्रयोजनम् ? अत्राह— यथेति । यथा सप्तभिः महदहङ्काराभ्यां पृथिव्यादिभिः पञ्चभिः भूतैः । पुमान् जीवः ॥ १७ ॥

प्रकृतिषु देहहेतुषु आत्मनमद्धा निधाय श्रेयः प्राप्नोति । तथा राजा च प्रकृतिशब्दवाच्यै राजजनैः रक्षितः तेषु राज्यभारं निधाय विहितं श्रेय आप्नुयादित्यन्वयः । तथा प्रकृत्यादयो यस्य राज्ञः वशवर्तिनः स्युः आत्मा मनश्चानुवशश्चेत् तर्हि सर्वे लोकास्तस्य राज्ञो वशगाः तस्मै बलिं

---

[1] भूश्चेयं नाभूवन्निति पाठे नतस्येत्येकं पदं, सर्वैनमस्कृतस्येत्यर्थः । भूश्चेयमभवन्निति पाठे न तस्येति भिन्ने पदं—स

अपि दारा सुतामात्या भृत्याः श्रेण्योऽथ मन्त्रिणः ।
पौरा जानपदा भूपा आत्मा च वशवर्तिनः ॥ १९ ॥

यस्यात्माऽनुवशश्चेत् स्यात् सर्वे तद्वशगा इमे ।
लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥ २० ॥

आत्मनः प्रीतयेऽप्यात्मा परतः स्वत एव वा ।
लक्षयेऽलब्धकामं त्वां चिन्तया शबलं मुखम् ॥ २१ ॥

---

यच्छन्तीत्यन्वयः । आत्मा स्वयं प्रकृत्यादेर्वशवर्ती चेत् प्रकृत्यादेरात्मवशत्वाभावेनानर्थस्य कारणभूता भवन्तीत्याह—अहितादय इति । अतो वशीकर्तव्या इत्यर्थः । आहितादय इति वा । आदिशब्देन हिताहितकर्तृत्वेन निहिताः[1] । अनेन प्रकृत्यादीनां गुणो दर्शितः । 'स्वाम्यमात्यो जनपदो दुर्गं द्रविणसञ्चयः । दण्डो मन्त्री च सप्तैतास्तस्य प्रकृतयः स्मृताः' इति । बुद्धिसहायो मन्त्री, कर्मसहायोऽमात्यः । यथा प्रकृतिगुप्तो राजा सुखमश्नुते तथा राज्ञा सन्तोषिताः प्रकृतयो राज्ञःसन्तोषहेतवो भवन्ति[2] । अन्यथाऽहितादयः अहितस्यासन्तोषस्य आदयः कारणभूता भवन्तीति योगविभागो वा ॥ १८ ॥

हे राजन्, दाराः सुतादयश्च तव वशवर्तिनोऽपि ? अनुकूलतया वर्तन्ते किम् ? आत्मा मनश्च वशवर्ती किम् ? ॥ १९ ॥

मनसो वशवर्तित्वे किं फलम् ? अत्राह—यस्येति । मनसः स्ववशवर्तित्वे भृत्यादयोऽपि स्ववशा भवन्ति । अन्यथा कोपलोभाद्यधीनस्य तव क्रोधादिना विमनसीकृता भृत्यादय उक्तकारिणो न भवन्ति । अतो मनसश्च वशवर्तित्वं क्रोधाद्यभावफलम् । क्रोधाद्यकरणे भृत्यादिवशीकरणम् ॥ २० ॥

किञ्च प्रपञ्चोऽपि भवदायत्त इत्याह—आत्मन इति । आत्मा प्रपञ्चोऽपि आत्मनस्तव प्रीतये स्यादित्यन्वयः । अस्त्वेवमिदं सर्वम् । भवन्मनसि किं प्रतीयत इति तत्राह—परत इति । अहं त्वां स्वतः परतो वाऽलब्धकाममप्राप्तकामं लक्षये पश्यामि । केन लिङ्गेनेत्यत उक्तम्—चिन्तयेति । शबलमलक्षणम् ॥ २१ ॥

---

[1] असष्टमिदं वचनम् । आदित एव हितकर्तृत्वेन निहिता इत्यपि पाठान्तरम्—ब

[2] प्रथमं अहितादय इति पाठं स्वीकृत्याहितस्यासन्तोषस्य आदयः कारणानीति व्याख्यातम् इदानीं आ सम्यक् हितस्य सन्तोषस्य आदयः कारणानीति व्याख्यायते । आहिता अधिकारस्थाने निहिता इत्यप्यपरोऽर्थः ।

श्रीशुक उवाच —

एवं विकल्पितो राजन् विदुषा मुनिनाऽपि सः ।
प्रश्रयावनतोऽभ्याह प्रजाकामस्ततो मुनिम् ॥ २२ ॥

चित्रकेतुरुवाच —

भगवन् किं न विदितं तपोज्ञानसमाधिभिः ।
योगिनां ध्वस्तपापानां बहिरन्तः शरीरिषु ॥ २३ ॥

तथाऽपि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिन्तितम् ।
भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया ॥ २४ ॥

लोकपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसम्पदः ।
न नन्दयन्त्यप्रजं मां क्षुत्तृट्कामभिवापरे ॥ २५ ॥

तन्नः पाहि महाभाग पूर्वैः सह गतं तमः ।
यथा तरेम दुस्तारं प्रजया तद् विधेहि नः ॥ २६ ॥

श्रीशुक उवाच —

इत्यर्थितः स भगवान् कृपालुर्ब्रह्मणः सुतः ।
श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद् विभुः ॥ २७ ॥

ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणाञ्च भारत ।
नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद् विभुः ॥ २८ ॥

अथाऽह नृपतिं राजन् भवितैकस्तवाऽऽत्मजः ।
हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ ॥ २९ ॥

---

एवं विकल्पितः । सन्ततिनिमित्तं दुःखं विदुषा । प्रश्रयलक्षणगुणेनावनतः प्रह्वः ॥ २२ ॥

आत्मनि मनसि ॥ २४ ॥ अपरे स्रक्चन्दनवनितादयः ॥ २५ ॥

पालनप्रकारमाह — पूर्वैरिति । पूर्वैः पूर्वजैः सह गतं प्राप्तम् । तमो नरकम् । यथा यया प्रजया तरेम तत् तादृशं प्रजालक्षणं वस्तु । यद् वा यथा येनोपायेन तरेम तत् नोऽस्माकं विधेहि । स क उपाय इति चिन्ता माभूदित्याह — प्रजयेति ॥ २६ ॥

त्वाष्ट्रं त्वष्टृदैवतम् ॥ २७ ॥

साऽपि तत्प्राशनादेव चित्रकेतोरधारयत् ।
गर्भं कृतद्युतिर्देवी कृत्तिकाऽग्नेरिवात्मजम् ॥ ३० ॥

तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः ।
ववृधे शूरसेनस्य तेजसा शनकैर्नृप ॥ ३१ ॥

अथ काल उपावृत्ते कुमारः समजायत ।
जनयन् शूरसेनानां शृण्वतां परमां मुदम् ॥ ३२ ॥

स राजा सुकुमारस्य स्नातः शुचिरलंकृतः ।
वाचयित्वाऽऽशिषो विप्रैः कारयामास जातकम् ॥ ३३ ॥

तेभ्यो हिरण्यरजतं वासांस्याभरणानि च ।
ग्रामान् हयान् गजान् प्रादाद् धेनूनामर्बुदानि षट् ॥ ३४ ॥

ववर्ष कामानन्येषां पर्जन्य इव देहिनाम् ।
धन्यं यशस्यमायुष्यं कुमारस्य महामनाः[1] ॥ ३५ ॥

कृच्छ्रलब्धेऽस्य राजर्षेस्तनयेऽनुदिनं पितुः ।
यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्धत ॥ ३६ ॥

मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः ।
कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत् ॥ ३७ ॥

चित्रकेतोरतिप्रीतिः यथा दारे प्रजावति ।
न तथाऽन्येषु सञ्जज्ञे बालं लालयतोऽन्वहम् ॥ ३८ ॥

ताः पर्यतप्यन्नात्मानं गर्हयन्त्योऽभ्यसूयया ।
अनपत्येन दुःखेन राज्ञश्चानादरेण च ॥ ३९ ॥

---

प्राशनात् स्वीकारात् ॥ ३० ॥ शूरसेनस्य चित्रकेतोः ॥ ३१ ॥
शूरसेनानां विषयाणाम् ॥ ३२ ॥
कीदृशं कर्माकरोत् ? अत्राह—धन्यमिति । धन्यं स्वधनादिसम्पत्करम्[2] ॥ ३५ ॥
निःस्वस्य दरिद्रस्य ॥ ३६ ॥ प्रजावति पुत्रवति ॥ ३८ ॥

---

[1] कुमारस्य महात्मनः—च [2] धनादेसम्पत्करमिति पेशाठम् ।

धिगप्रजां स्त्रियं पापां पत्युश्चागृहसम्मताम् ।
सुप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम् ॥ ४० ॥

दासीनां को नु सन्तापः स्वामिनः परिचर्यया ।
अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः ॥ ४१ ॥

एवं सन्दह्यमानानां सपत्न्याः पुत्रसम्पदा ।
राज्ञोऽसम्मतवृत्तीनां विद्वेषो बलवानभूत् ॥ ४२ ॥

विद्वेषान्नष्टमतयः स्त्रियो दारुणचेतसः ।
गरं ददुः कुमाराय विद्वेषान्नृपतिं प्रति ॥ ४३ ॥

कृतद्युतिरजानन्ती सपत्नीनामघं महत् ।
सुप्त एवेति सञ्चिन्त्य निरीक्ष्य व्यचरद् गृहे ॥ ४४ ॥

शयानं सुचिरं बालमुपधार्य मनीषिणी ।
पुत्रमानय मे भद्रे इति धात्रीमचोदयत् ॥ ४५ ॥

सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम् ।
प्राणेन्द्रियात्मभिस्त्यक्तं हताऽस्मीत्यपतद् भुवि ॥ ४६ ॥

तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नन्त्याः कराभ्यामुर उच्चकैरपि ।
प्रविश्य राज्ञी त्वरयाऽऽत्मजान्तिकं ददर्श बालं सहसा मृतं सुतम् ॥

पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहाम्बरा ।
ततो नृपान्तःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम् ।
आगत्य तुल्यव्यसनाः सुदुःखितास्ताश्च व्यलीकं रुरुदुः कृतागसः ॥

श्रुत्वा मृतं पुत्रमलक्षितान्तकं विनष्टदृष्टिः प्रपतन् स्खलन् पथि ।
स्नेहानुबन्धैधितया शुचा भृशं विमूर्छितोऽनुप्रकृतिर्द्विजैर्वृतः ॥ ४९ ॥

---

स्वामिनः स्नेहाभावे दासीत्वमप्रयोजकमित्याह—दासीनामिति[1] ॥ ४१ ॥

गरं विषम् ॥ ६३ ॥ धात्रीं स्तनदात्रीम् ॥ ४५ ॥

उत्तारलोचनं उन्नततारायुक्तनेत्रम् ॥ ४६ ॥ अनुप्रकृतिः सप्रकृतिजनः ॥ ४९ ॥

---

[1] दासीमिव तिरस्कृतामित्युत्प्रेक्षितं स्वयमालोच्य तिरस्कुर्वन्ति—दासीनामिति । स्वामिनः साक्षात्परिचर्यया लब्धमानानां प्राप्तसत्काराणाम् । अतो राजस्नेहपात्रत्वात् तत्त्वेन (दासीत्वेन) उत्प्रेक्षणं न युक्तम्—स.

पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहाम्बरः ।
दीर्घं श्वसन् बाष्पकलोपरोधतो निरुद्धकण्ठो न शशाक भाषितुम् ॥

पतिं निरीक्ष्योरुशुचाऽर्पितं तदा मृतं च बालं सुतमेकसन्ततिम् ।
जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना विललाप चित्रधा ॥ ५१ ॥

स्तनद्वयं कुंकुमपङ्कमण्डितं निषिञ्चती साञ्जनबाष्पबिन्दुभिः ।
विकीर्य केशान् विगलत्स्रजः सुतं शुशोच चित्रं कुररीव सुस्वरम् ॥

अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ।
परे तु जीवत्यपरस्य या मृतिः विपर्ययश्चेत् त्वमसि ध्रुवं परः ॥५३ ॥

न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदात्मकर्मभिः ।
यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि ॥ ५४ ॥

---

श्रोतॄणां चित्रवाचा वदन्ती शुशोचेति ॥ ५२ ॥

शोकलक्षणं वाक्यं दर्शयति—अहो इति । अतीव बालिशः जडाज्जडः । कथं मम जाड्य मापाद्यत इति तत्राह—यस्त्विति । यस्त्वात्मसृष्टेरप्रतिरूपं प्रतिकूलं विरुद्धमीहसे । तु एव । 'तुः स्याद् भेदेऽवधारणे' इत्यभिधानात् । कथमियं विरुद्धचेष्टाऽभूत् ? अत्राह—पर इति । परे पूर्वतने पितरि मातरि वा जीवत्यपरस्य पश्चादुत्पन्नस्य पुत्रस्य या मृतिः सा त्वया आपाद्यते । यस्मात् तस्मादिति शेषः । यद्यपि संहारेऽयं क्रमः, तथापि स्थितावनुपपन्नोऽयमिति सूचयति तुनेति वा[1] । कथं तर्हि जाड्यपरिहार इति तत्राह—विपर्यय इति । उक्ताद् विपर्ययोऽन्यथा । पूर्वतनस्य पूर्वं मृतिः पश्चात्तनस्य पश्चान्मृतिः यदि, तर्हि ध्रुवं निश्चितं त्वं परोऽसि जडादन्यः प्राज्ञोऽसि । स्वचेष्टानुसारि-चेष्टत्वादित्यर्थः ॥ ५३ ॥

'सन्तापक्रोधरागादिष्वनर्थज्ञवचः क्वचित्'[2] इति वचनात् सन्तापादनन्वितमित्याह[3]—न हीति । शरीरिणां मृत्युजन्मनोः क्रमो नास्ति चेत् तदा तर्हि आत्मकर्मभिः स्वकर्मानुकूल्येनास्तु । ते त्वया स्वयं सर्गवृद्धये स्नेहपाशो मोहपाशो मम पुत्रोऽयमिति स्नेहानुबन्धः कृतः । तमिमं स्नेहपाशं विवृश्चसि भिनत्सीति न सम्यक् करोषि ॥ ५४ ॥

---

[1] इति वा सूचयति तुना इत्यन्वयः ।

[2] तात्पर्यवाक्यमेतत् । अनर्थज्ञस्य अज्ञस्य वच इव वचः क्वचिद् भवेत्—स. 'सन्तापक्रोधरागादिष्वनर्थ-ज्ञवचः क्वचित्'—इ । स च सह्यार्थ एव । [3] अनन्वितमाहेति यावत् ।

त्वं तात नार्हसि च मां कृपणामनाथां
त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम् ।
अञ्जस्तरेम भवताऽप्रजदुस्तरं यद्
ध्वान्तं न याह्यकरुणेन यमेन दूरम् ॥ ५५ ॥

उत्तिष्ठ तात त इमे शिशवो वयस्या-
स्त्वामाह्वयन्ति नृपनन्दन संविहर्तुम् ।
सुप्तश्चिरं ह्यशनया च भवान् परीतो
भुंक्ष्व स्तनं पिब शुचो हर नः स्वकानाम् ॥ ५६ ॥

नाहं तनूज ददृशे हतमङ्गला ते
मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ।
किं वा गतोऽस्यपुनरन्वयमन्यलोकं
नीतोऽघृणेन न शृणोमि कला गिरस्ते ॥ ५७ ॥

श्रीशुक उवाच —

विलपन्त्यां मृतं पुत्रमिति चित्रविलापनैः ।
चित्रकेतुर्भृशं तप्तो मुक्तकण्ठो रुरोद ह ॥ ५८ ॥

तयोर्विलपतोः सर्वे दम्पत्योस्तदनुव्रताः ।
रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम् ॥ ५९ ॥

---

त्वमकरुणेन यमेन दूरं न याहीत्यन्वयः । इदं क्रोधं कटाक्षीकृत्योक्तमिति ज्ञातव्यम् ॥ ५५ ॥

अशनया अशनेच्छया । भवामित्यनर्थज्ञवचः स्पष्टं प्रतीयते ॥ ५६ ॥

इदमपि रागनिमित्तमिति भावेनाह — नाहमिति । मुदिते प्रसन्ने वीक्षणे यस्य तत् तथोक्तम् । क्रोधं ध्वनयन्ती शोचति — किं वेति । अपुनरन्वयं पुनःसंबन्धशून्यम् । अघृणेन, यमेनेति शेषः ॥ ५७ ॥

इयमेकैव विलपन्त्यभूत् नान्य इत्यतः पूर्वोक्तविलापं स्पष्टयति — विलपन्त्यामिति ॥ ५८ ॥

अचेतनं बुद्धिशून्यम् । अश्मवत् प्रवृत्तिशून्यं पुरं वा ॥ ५९ ॥

एवं कश्मलमापन्नं नष्टसंज्ञमनायकम् ।
ज्ञात्वाऽङ्गिरो नाम मुनिराजगाम सनारदः ॥ ६० ॥

इति श्रीमद्भागवते षष्ठस्कन्धे चतुर्दशोऽध्यायः ।

॥ अथ पञ्चदशोऽध्यायः ॥

श्रीशुक उवाच —

ऊचतुर्मृतकोपान्ते पतितं मृतकोपमम् ।
शोकाभिभूतं राजानं बोधयन्तौ सदुक्तिभिः ॥ १ ॥

कोऽयं स्यात् तव राजेन्द्र भवान् यमनुशोचति ।
त्वं चास्य कतमः सृष्टौ पुरेदानीमतः परम् ॥ २ ॥

यथा प्रयान्ति संयान्ति स्रोतोवेगेन बालुकाः ।
संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ॥ ३ ॥

---

अनायकं बोधकरहितम् । अस्मिन्नवसरे सुहृदोऽङ्गिरस आगतिं वक्ति—ज्ञात्वेति । अनेन ऋषिस्त्रिकालदर्शीति स्पष्टितम् ॥ ६० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां षष्ठस्कन्धस्य चतुर्दशोऽध्यायः ।

॥ अथ पञ्चदशोऽध्यायः ॥

अत्र[1] संसारोऽनित्यः तदुच्छेदो ज्ञानेनैव, तदपि निरन्तरोपासितश्रीनारायणानुग्रहादुत्पद्यत इत्येतत्सर्वं निरूप्यतेऽस्मिन्नध्याये । तत्राङ्गिरोनारदावागत्य किं चक्रतुरित्याशङ्कायामाह—श्रीशुक इति । मृतकोपान्ते शवसमीपे ॥ १ ॥

यमनुशोचति अयं तव कः स्यात् ? कीदृशो बन्धुः स्यात् ? इदानीं पुत्र इति भ्रान्तिश्चेत् तर्हि विरिञ्चिसृष्टौ पुराऽतीतकाले त्वमस्य बालस्य बन्धूनां मध्ये कतमो बन्धुः ? पिता मातुलो वा सहोदरो वा ? अतः परमेष्यति काले च कतमो बन्धुरिति शेषः । अयं च पूर्वापरकालयोस्तव कतम इति योज्यम् । यथा पूर्वोत्तरकाले युवयोर्न कोऽपि सम्बन्धस्तथेदानीमपि भ्रान्तिमन्तरेणेत्यतः शोको न कार्य इति भावः ॥ २ ॥

ननु तर्हि इदं सर्वं मायाकल्पितमस्त्विति तत्राह—यथेति । यथा बालुकाः सिकताः स्रोतोवेगेन

---

[1] अथ इति स्यात् ।

यथा धानासु वै धाना भवन्ति न भवन्ति च ।
एवं भूतेषु भूतानि चोदितानीशमायया ॥ ४ ॥

वयं च त्वं च ये चेमे तुल्यकालाश्चराचराः ।
[1]जन्ममृत्योर्यथा पश्चात् प्रागेवमधुना[2] विभो[3] ॥ ५ ॥

भूतैर्भूतानि भूतेशः सृजत्यवति हन्त्यजः ।
आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत् ॥ ६ ॥

---

नदीप्रवाहवेगेन प्रयान्ति संयान्ति संयुज्य राशीभवन्ति, तथा 'कल ज्ञाने' इति धातोः कालेन ज्ञानमूर्तिना देहिनः संयुज्यन्ते संबध्यन्ते । 'कल द्रावणे' इति धातोः कालेन संहारमूर्तिना वियुज्यन्ते ॥ ३ ॥

ननु त्यक्तदेहाः पुनर्देहान्तरमाप्नुवन्ति, उत शून्यताम् आहोस्विदनिवृत्तिलक्षणामवस्थामिति तत्राह —यथेति । धानासु बीजेषु अंकुरादिसमृध्द्या परिपक्वेषु सत्सु ततो धानान्तराणि बीजान्तराणि क्वचिद् भवन्ति, क्वचित् प्रतिबन्धान्न भवन्ति यथा, तथा भूतेष्वपि ईशमायया नारायणेच्छया चोदितानि प्ररितानि पुत्रादिव्यवहारयोग्यतयोत्पद्यन्ते । क्वचिद् भर्जनादिलक्षणप्रतिबन्धानि बीजानि अंकुरादिकार्यं न जनयन्ति यथा, तथा ज्ञानाग्निभर्जितसंसारबीजानि भूतानि पुनरावृत्तिशून्यावस्थां मुक्तिलक्षणामाप्तानि नोत्पद्यन्त इतीमं विशेषं वा इत्यनेन दर्शयति ॥ ४ ॥

इतोपि पुत्राद्यात्मना संबन्ध एवमित्याह--वयमिति । अस्मिन् क्षण एव तुल्यकालत्वम् । अन्ययोः क्षणयोः यथा नास्ति, देहनाशात् । तथा प्रकृतेऽपीति भावः । ननु देहनाशानाशाभ्यां सदा तुल्यकालत्वाभावश्चेत्, तर्हि सर्वदा तुल्यकालत्वं कस्येति तत्राह—जन्ममृत्योरिति । जन्ममृत्योः पूर्वापरकालयोर्यथा सृष्ट्यादिकं करोति तथाऽधुनाप्येवमेवेति । अनेन हरेरेव देहेन सदातनत्वमुपवर्णितम् । अस्य चैतन्यसदातनत्वेऽपि देहस्य नास्तीति विशेष इत्यभिप्रायः । 'देहस्य सर्वथा नाशादनाशाच्चेतनस्य तु ' इति स्मृतेः ॥ ५ ॥

केनोद्भूतैरिति तत्राह—आत्मेति । भूतानि स्वयमेव सृजन्तीति किं न स्यादिति तत्राह—

---

[1] जन्ममृत्यू इति स पाठः । तथा हि तद्व्याख्या—'यावत्कल्पिरैशी तावत्पर्यन्तं सदसन्मिश्राणां विश्रमश्रम-मिश्रफलमैहिकं भुक्त्वा उपादेयस्योपादानप्रवेशानन्तरमनन्तानुग्रहनिग्रहैः स्वस्वगतिरिति वक्तुमुत्तरो ग्रन्थः। वयं च त्वं चेमे उपोपविष्टा ये चराचरा ज्ञा अज्ञाश्च तुल्यकालवर्तमानास्तेषामस्माकं प्राग् जन्म पश्चान्मृत्युर्यथा तथा अधुनापि । एवमुत्तरत्रापि ' इति ।

[2] भो राजन् तुल्यकाला वर्तमानकालीना अस्मदादयो जन्मनः प्राक् मृतेः पश्चाच्च यथा न पित्रादिभावापन्ना एवमधुनापीति विद्धीत्यर्थः—चेट्टी [2] अधुनाऽपि भोः—च [3] अस्पष्टमिदं वाक्यजातम्

देहेन देहिनो राजन् देहाद् देहोऽभिजायते ।
बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः ॥ ७ ॥

---

अस्वतन्त्रैरिति । न चार्थार्थी सृजत्ययमित्याह—अनपेक्ष इति । अथास्मात् सर्जनात् प्रयोजनापेक्षा (यदि) न स्यात् कथं तर्हीदं सर्जनम्? प्रयोजनमन्तरेण प्रवृत्त्यदर्शनादित्यत्राह—बालवदिति । यथा बालः 'क्रीडनकैः[1] क्रीडति तथाऽयम् । 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रात् ॥ ६ ॥

भूतैरुपकरणैरीश्वरः कथं सृजतीत्यतस्तं प्रकारं दर्शयति—देहेनेति । पितुर्देहेन संयुक्तान्मातुर्देहाद् देहिन उत्पत्स्यमानस्यास्य पुत्रलक्षणजीवस्य देहोऽभिजायते । न तु चेतनः । तस्य नित्यत्वात् । 'दिह उपचये' इति धातोः देहशब्दोपलक्षितपूर्वकर्मणा फलदानायेश्वरप्रेरितेन । देहिनः पितृमातृशब्दवाच्यस्य देहादुपादानभूताद् देहः, पुत्रस्येति शेषः, इति वा । अभीत्युपसर्गेणानेककुलपरम्परासृष्टिमुपलक्षयति । अत्र दृष्टान्तमाह—बीजादिति । बीजात् पनसादिलक्षणात् जलतेजआदिसामग्रीसंवृतादंकुराख्यं वृक्षजीवशरीरं तेन सह जायते । तस्माद् युक्तजलाद्याप्तसारात् पनसादिबीजान्तरमुत्पद्यते तस्माच्चेति यथा कार्यपरम्परा । न चैवमनवस्था । मूलकार्यस्य प्रकृत्यात्मकत्वात् । तथा पितृमातृविकारशुक्रशोणितसंबन्धे कलिलादिलक्षणं कार्यमभिमानिजीवेन सह जायते । तस्मात् परिणतावयवात् स्त्रीपुरुषभूताद् रेतआदिक्रमेण कार्यान्तरं जायते इति । अनेन क्रमेण भगवान् भूतैः सृष्टिं करोति इति । स्थितिसंहारयोरेवमूह्यम् । तददृष्टेश्वरेच्छावशादिति ग्राह्यम् । 'अथातो रेतसः सृष्टिः' इति श्रुतेः । तस्मात् सर्वाणि कार्याणि कानिचिदाहत्यात्मना नारायणायनानि, कानिचित् परम्परया तदधीनानि । तत्रापि विशेषस्तु प्रमाणादवगन्तव्यः । तदुक्तञ्च—'नारायणायना देवा ऋष्याद्यास्तत्परायणाः । ब्रह्माद्याः केचनैवं स्युः सिद्धो योग्यं सुख लभेत्[2] ।' अत्रापि कियन्त इतीयमाशङ्का च । 'नवकोट्यस्तु देवानामृषीणां शतकोटयः । नारायणायनाः सर्वे ये केचित् तत्परायणाः' इति एतद्वाक्यद्वयं सर्वस्य नारायणाश्रयत्वेन वक्तव्यत्वात् 'मुक्तानामपि सिद्धानां नारायणपरायणः' इत्यादौ नोदाहृतम् । उभयत्रापि इदमेव प्रमाणमिति सन्तोष्टव्यम्[3] । ननु देहनाशवद् देहिनाशे

---

[1] क्रीडनम्—ब  [2] लभन् ह

[3] 'नारायणायना देवाः' इति तात्पर्यवचनं, 'नवकोट्यो हि' इति तात्पर्यवचनं च 'मुक्तानामपि सिद्धानाम्' इत्यतीताध्यायस्थपञ्चमश्लोकसंबद्धतयोदाहृत्य व्याख्यातं सत्यधर्मतीर्थैः श्रेष्ठी आचार्यैश्च । विजयध्वजतीर्थास्तु अत्रोदाहृतमिदं प्रमाणवचनद्वयं सिंहावलोकनन्यायेन पूर्वाध्यायगतं श्लोकमपि व्याख्यातीत्यभिप्रयन्ति । वस्तुतस्तु एतदध्यायगत 'चरन्ति ह्यवनौ कामं ....' इत्यादिश्लोकपञ्चक (१५-१९) सन्दर्भे श्लिष्टतममिदं तात्पर्यवचनं सिंहावलोकनन्यायेन पूर्वत्राप्यनुसन्धेयम् । अत्रैतदुदाहरणं लेखकप्रमादायत्तमिति भाति ।

देहदेह्यविभागोऽयमविवेककृतः पुरा ।
जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः ॥ ८ ॥
नानात्वं जन्मनाशश्च क्षयो वृद्धिः क्रियाफलम् ।
द्रष्टुश्च भान्त्यतद्धर्मा यथाऽग्नेर्दाह्यविक्रियाः ॥ ९ ॥

---

पुरुषार्थानुपपत्तिः ? अत्राह--देहेति । देहदेहिनोर्मध्ये देही शाश्वतः अभिमानमन्तरेण जन्मनाशरहिततया कालत्रयेऽपि एकप्रकारः । कथमिव ? अर्थ इव । मोक्षलक्षणपुरुषार्थ इव । शब्दार्थ इव वा । तर्हि ब्रह्मसाम्यमायातमित्यस्याप्येतदेवोत्तरम् । देह्यर्थः जीवाख्यः पदार्थः शाश्वत इव नित्य इव । 'द्रव्यं कर्म च कालश्च' इत्यादेः जीवनित्यत्वस्य श्रीनारायणाधीनत्वेनोपचरितत्वाद्धरेरेव निरुपचरितनित्यत्वम् । अतस्तयोर्न साम्यमित्यर्थः । केचिदेवं व्याचक्षते । 'अर्थः 'नरत्वजातिमात्रमिव । यथा जातेर्नित्यत्वं तथा जीवस्यापि' इति । एतच्चिन्त्यम् । 'कुतो भस्मत्वमाप्तस्य नरत्वं पुनरिष्यते' इति वचनात् । तत्तन्नरत्वादेस्तत्तन्नाशेन नाशसंभवान्नित्यत्वानुपपत्तेः ॥ ७ ॥

कृशोऽहं स्थूलोऽहमित्यभेदानुभवाद् देहिनो नित्यत्वं देहस्यानित्यत्वमित्ययं विशेषः कथं घटत इति तत्राह—देहेति । अविवेककृतोऽज्ञाननिर्मितः । नचायमाधुनिकः शुक्तिरजतादिवदित्युक्तम्–पुरेति । पुरा पुरातनः अनादिमानित्यर्थः । अनेन ज्ञानेनाज्ञाने नष्टे उक्तविशेषो घटत इत्युक्तं भवति । अत्र दृष्टान्तमाह—जातीति । यथा गवादिवस्तुनि गोत्वगवादिपिण्डानां विभागो भेदः कणादादीनामज्ञानेन कल्पितः । न तु वास्तवः । अज्ञानकृतत्वमात्रे दृष्टान्तोऽयम् । तस्माद् भेदाभेदत्वे अप्रयोजके इति[2] । कणादादीनां तमोयोग्यत्वप्रकटनाय तन्मतोदाहरणम् । वस्तुनि हरौ गोपालत्वादिजातिव्यक्तिविभागो यथा कल्पितः आरोपितस्तथेति वा ॥ ८ ॥

देहदेह्यविभागप्रतीतेरनुभवात् कथं नानात्वादिभ्रान्तिप्रतीतिरित्यत[3] आह—नानात्वमिति । अतद्धर्माः यो जीवस्तस्मादन्यस्य देहस्य धर्माः सुरो नरोऽहमित्यादिनानात्वादयो द्रष्टुर्जीवस्य विद्यमाना इति भ्रान्तिः । क्रियाफलमिति हेतुगर्भविशेषणम् । कर्मफलत्वात् । अग्निना दाह्यस्येन्धनस्य विक्रियाः वृद्धिक्षयादिविकाराः अग्नेरिति भ्रान्तिः । भ्रान्त्येन्धनसमृद्धौ समृद्धोऽग्निस्तद्ध्रासे क्षीण इत्यादयः । द्रष्टुर्ज्ञानिनो हरेरतद्धर्मा इत्येव भान्ति । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेर्नेदं दर्शनं भ्रान्तम् । अनेन देहिदेहभेदे प्रमाणमुक्तं भवतीति वा ॥ ९ ॥

---

[1] नरत्वादि—ब [2] अस्पष्टमिदं वाक्यम् । [3] नानात्वादिप्रतीतिर्भ्रान्तिरित्यतः—ब

त इमे देहसंयोगादात्मन्याभान्त्यसद्ग्रहात् ।
स्वप्ने यथा तथा नान्यद् ध्यायेत् सर्वं भयं च यत् ॥ १० ॥
प्रसुप्तस्यानहम्मानाच्च घोरा भाति संसृतिः ।
जीवतोऽपि यथा तद्वद् विमुक्तस्यानहम्मतेः ॥ ११ ॥
तस्मादन्यन्मनोमात्रं जह्यहम्ममतातमः ।
वासुदेवे भगवति मनो धेह्यात्मनीश्वरे ॥ १२ ॥

---

इदमेव विवृणोति — त इम इति । ये ये प्रत्यक्षादिप्रमाणसिद्धा जन्मनाशादयस्त इमे जीवस्य देहसंयोगादात्मनि जीवे मनसि वा भांति । कुतः ? असद्ग्रहात् देहोऽहमित्यभिमानात् । अत्रोदाहरणमाह — स्वप्न इति । जाग्रद्दृष्टसर्पव्याघ्रादिसंस्कारवशात् स्वप्नेऽपि यथा तद्दर्शनात् सर्वं भयमित्याद्यनर्थजातं[1] भवति, तथाऽनादिकालीनमिथ्याभिमानादनर्थकरः संसारः स्यादिति यद् यस्मात् तस्मात् तन्निवृत्त्युपायमाह — नान्यदिति । अन्यदनर्थकारणं न ध्यायेदित्यन्वयः । ननु शुक्तिकाधिष्ठाने रजतं यथा प्रतीयते तथा जन्मादिकं किमधिष्ठानमित्येतां मन्दाशङ्कां वा परिहरति[2] — त इति । आत्माधिष्ठानम् । शुक्तिरजतवज्जन्मादिकं मिथ्याभूतं भवेदित्यतः स्वप्नपदार्थानामर्थक्रियाकारित्वाद् यथा सत्यत्वमङ्गीकर्तव्यं तथा जन्मादीनामित्यभिप्रेत्याह — स्वप्न इति । अन्यद् देहात्मत्वम् ॥ १० ॥

अनन्यध्यानफलं सदृष्टान्तमुपपादयति — प्रसुप्तेति । प्रकर्षेण सुप्तस्य । प्रकर्षेण सुप्तेर्मरणापरपर्यायत्वात् तन्निवृत्त्यर्थं — जीवतोऽपीति । धृतप्राणस्यापि । ज्ञानपूर्वं बाह्यप्रवृत्तिशून्यस्यानहम्मानाद् देहात्मत्वादिभ्रान्तिज्ञानराहित्याद् यथा घोरा संसृतिर्न भाति तद्वत् तथा विमुक्तस्य सा न भाति । कुतः ? विमुक्ताहम्भावबुद्धित्वात् । अनेनानन्यध्यानेन कैवल्यप्राप्तिः सूचिता भवतीति ॥ ११ ॥

फलितमाह — तस्मादिति । यतोऽनहम्मानिनो घोरसंसारहानिः, अन्यस्य तद्भावश्च तस्मादन्यत् पुत्रादिकं मनोमात्रं मनोगतरागद्वेषजनितपुण्यपापनिमित्तम् । एतदुक्तं भवति । अहम्मानेन मनसो रागद्वेषौ स्याताम् । तयोः पुण्यपापे भवतः । ताभ्यां च पुत्रादिकमुत्पद्यते । 'मनसो द्वेषरागाभ्यां पुण्यपापसमुद्भवः । पुत्रादि पुण्यपापाभ्यां तस्मात् सर्वं मनोभवम्' इति वचनात् । अनेन पुत्रादेर्दीर्घायुष्यादिकं पुण्यपापनिमित्तं भवतीति सूचितमिति । ननु तदस्तु, ततः किं प्रकृत इति तत्राह — जहीति । तद्धननोपायमाह — वासुदेव इति । आत्मनि बिम्बभूते । देहस्थितत्वेऽपि तद्देहगतदुःखाद्यस्पर्शे समर्थ इति द्योतनाय ईश्वरेति । मनोधारणयोत्पन्नतत्प्रसादोद्भूतज्ञानासिना तमोऽहम्ममतालक्षणं निर्मूलयेत्यर्थः ॥ १२ ॥

---

[1] भयाद्यनर्थजातमिति यावत् ।   [2] इयमवतारिका नातीव स्वरसा ।

श्रीशुक उवाच —

एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः ।
विमृज्य पाणिना वक्त्रमाधिम्लानमभाषत ॥ १३ ॥

राजोवाच —

कौ युवां ज्ञानसंपन्नौ महिष्ठौ च महीयसाम् ।
अवधूतेन वेषेण गूढाविह समागतौ ॥ १४ ॥

चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः ।
मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः ॥ १५ ॥

कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः ।
अपान्तरतमो व्यासो मार्कण्डेयोऽथ गौतमः ॥ १६ ॥

वसिष्ठो भगवान् रामः कपिलो बादरायणिः ।
दूर्वासा याज्ञवल्क्यश्च[1] जातूकर्ण्यस्तथाऽऽरुणिः ॥ १७ ॥

रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः[2] ।
पराशरोऽथ मैत्रेयो भरद्वाजश्च आरुणः ।
ऋषिर्वेदशिरा बोध्यो मुनिः पञ्चशिखस्तथा ॥ १८ ॥

हिरण्यनाभः कौशल्यः श्रुतदेवः ऋतुर्ध्वजः ।
एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः ॥ १९ ॥

---

आधिना म्लानम् ॥ १३ ॥ अवधूतेन वेषेण धूलिरूषिताकारेण ॥ १४ ॥ उन्मत्तस्य लिङ्गमेषामस्तीति तथा ॥ १५ ॥ मार्कण्डेयगौतमयोर्मध्येऽन्यो नास्तीति द्योतनायाथशब्दः ॥ १६ ॥ ज्ञानहेतवः, लोकानामिति शेषः[3] ॥ १९ ॥

---

[1] दुर्वासयाज्ञवल्क्ययोर्विशेषद्योतकश्चशब्दः—ब

[2] यो महाभाष्यकर्ता स पतञ्जलिनामा बोध्यः—ब

[3] ज्ञानहेतवो लोकानामिति शेषः । ब्राह्मणा भगवत्प्रियाः, सिद्धेशा ज्ञानहेतव इत्येतैर्विशेषणैर्विशिष्टत्वस्य प्रतिपाद्यमानत्वादेतेषां सर्वेषां साम्यम् । नारायणपरा देवा इत्यादिस्मृत्या अवान्तरविशेषस्य ज्ञायमानत्वात् । 'नारायणपरा देवाः' इत्यादिवाक्यं 'मुक्तानामपि सिद्धानां ....' इत्यत्र 'ब्राह्मणा भगवत्प्रियाः' इत्यत्र च प्रमाणार्थमस्मिन्न्याय उदाहृतम् । ब्रह्म भणन्ति अयन्ते आश्रयन्ते ब्रह्मणैवेति ब्राह्मणा इति व्युत्पत्त्या देव (वेद ?) द्वारा नारायणायनत्वं लब्धं योग्यसुखत्वं चेत्युभयं सिद्धम् । तेन कियन्त इत्याशङ्का 'नमकोऽभ्यस्तु ....' इत्यादिकया परिहर्तव्या—ब

तस्माद् युवां ग्राम्यपशोर्मम मुग्धधियः प्रभू ।
अन्धे तमसि मग्नस्य ज्ञानदीप उदीर्यताम्  ॥ २० ॥

अङ्गिरा उवाच —

अहं ते पुत्रकामस्य पुत्रदोऽस्म्यङ्गिरा नृप ।
एष ब्रह्मसुतस्साक्षान्नारदो भगवान् ऋषिः  ॥ २१ ॥

इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे ।
अतदर्हमनुस्मृत्य महापुरुषगोचरम्  ॥ २२ ॥

[1]अनुग्रहाय भवतः प्राप्तावावामिह प्रभो ।
ब्रह्मण्यो भगवद्भक्तो नावसीदतुमर्हति  ॥ २३ ॥

तदैव ते परं ज्ञानं ददामि गृहमागतः ।
ज्ञात्वाऽन्याभिनिवेशं ते पुत्रमेवाददामहम्[2]  ॥ २४ ॥

[3]अधुना पुत्रिणां तापो भवतैवानुभूयते ।
एवं दारा गृहा रायो विविधैश्वर्यसम्पदः  ॥ २५ ॥

शब्दादयश्च विषयाश्चला राजन् विभूतयः ।
राज्यं मही बलं कोशो भृत्यामात्यसुहृज्जनाः  ॥ २६ ॥

---

युवां युवाभ्याम् ॥ २० ॥ महापुरुषगोचरं भक्तिस्मरणादिमत्त्वेन श्रीविष्णुविषयम् ॥ २२ ॥

नावासीदतुमर्हति पुत्रनिमित्तशोकेन नष्टो मा भूदिति ॥ २३ ॥

तर्हि तदानीं पुत्रः किमिति दत्त इति तत्राह — तदेति । तदा पूर्वागमनकाले ज्ञानमेव ददामीति गृहमागतोऽहम् । तवान्याभिनिवेशं पुत्रविषयाग्रहं ज्ञात्वा ते पुत्रं तुभ्यं पुत्रमेवाददाम् । इदानीं ज्ञानं ददामीति शेषः ॥ २४ ॥

इदानीं दातुमवसर[4] इत्याह — अधुनेति । न केवलं पुत्रवतामेव तापः । किन्तु दारादिमतामप्यविनाभूतोऽयमित्याह — एवमिति ॥ २५ ॥

---

[1] अनुग्रहाद् भगवतः — स   [2] पुत्रमेव ददावहम् — च

[3] अधुनेत्यारभ्या न दृश्यन्ते मनोभवाः इति पर्यन्तं सार्धत्रिकश्लोकस्यैकान्वय इति सत्यधर्मतीर्थाः ।

[4] विषयदोषदर्शनेन तव विरक्तत्वादिति भावः ।

सर्वेऽपि शूरसेनेमे शोकमोहभयार्तिदाः ।
गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः ॥ २७ ॥

दृश्यमाना विनाऽर्थेन न दृश्यन्ते मनोभवाः ।
कर्माभिध्यायतो नाना कर्माणि मनसोऽभवन् ॥ २८ ॥

अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः ।
देहिनो विविधक्लेशसन्तापकृदुदाहृतः ॥ २९ ॥

---

स्वप्नमायामनोरथवदनित्यत्वेन दृश्यमानाः प्रतीयमाना अर्थेन पुरुषार्थलक्षणप्रयोजनेन विना दृश्यन्त इति यो नियमः स नास्तीत्यध्याहृत्यान्वेतव्यम् ॥ २७ ॥

तथाहि योग्यतानुसारेण कदाचित् पुरुषार्थहेतुत्वेन दृष्टत्वात् कदाचिन्नेति नियमाभावः । कुतः ? मनोभवाः मनसो भव उत्पत्तिर्येषां ते तथा । तेन कल्पितत्वात् । एतदेव विवृणोति—कर्मेति । निरन्तरं कर्म चिन्तयतः पुंसो मनसो मनःक्षोभात् नानाकर्माणि निरययोग्यानि[1] कर्माण्यभवन् भवन्तीति यस्मात् तस्मात् तदनुसारेण दारादिसंभवात् सदा पुरुषार्थहेतुत्वनियमो नास्तीति भावः ॥ २८ ॥

देहादेरर्थक्रियाकारित्वान्न मिथ्यात्वं वक्तुमुचितं गन्धर्वनगरादिवत् । अतो नश्वरत्व एव दृष्टान्त इत्यभिप्रेत्याह—अयं हीति । देहिनोऽयं देहो देहिनो जीवस्य विविधक्लेशसन्तापकृदुदाहृत इत्यन्वयः । हिशब्दो हेतौ । अभिमानाच्चेतनस्य सुखादिभोगो न तु देहस्येति द्योतनाय देहिन इति पुनर्वचनम् । अयमित्युक्त्या स्थूलदेहसिद्धावपि स्पष्टत्वायाह—द्रव्येति । द्रव्यात्मकः पञ्चभूतात्मकः स्थूलदेहः । गण्डशैलादीनां स्थूलत्वेऽपि भोगायतनत्वाभावात् कथमेतदिति तत्राह—ज्ञानेति । ज्ञानेत्यनेन श्रोत्रादि-पञ्चकमेकं मनश्च गृह्यते । क्रियापदेनापि वागादिपञ्चकं कर्म च लक्ष्यते । ज्ञानेन्द्रियकर्मेन्द्रियमन आत्मकत्वेन वैलक्षण्याद् भोगायतनत्वमुपपद्यते । इन्द्रियकार्यज्ञानक्रियाशब्दाभ्यां इन्द्रियोक्तिः 'कार्यकारणयोरेकशब्दव्यवहृतिर्भवेत्' इत्यतो युज्यते । 'असन्नपि क्लेशद आस देहः' इत्यादौ सिद्धत्वादुदाहृत इत्युक्तम् । अनेनासदुपासनं क्लेशकरं देहवदित्ययमर्थोऽपि ध्वनित इत्यपि ज्ञातव्यम्[2] ॥ २९ ॥

[1] निरयमानुषस्वर्गमुक्तियोग्यानि—च

[2] असदुपासनस्याप्यसत्त्वाविशेषेण देहवत् क्लेशावहत्वसंभावात् ।

तस्मात् स्वस्थेन मनसा विमृश्य गतिमात्मनः ।
द्वैते ध्रुवार्थविस्रम्भं त्यजोपशममाविश ॥ ३० ॥

भोजो नाम नृपः स्वप्ने शत्रुग्रस्तान्नभोजनः ।
दुःखं दुर्विषहं प्राप्तः शोकमोहभयार्दितः ॥ ३१ ॥

केचिद् विलुलुपुर्भोगानपरेऽवधिषुः श्रितान्[1] ।
पूर्ववैरग्रहैर्जाया[2] अन्य आत्मशिरोऽहरन् ॥ ३२ ॥

इत्थं दुरन्तदुःखौघादुत्थितस्तदनुस्मरन् ।
तावद् भृशं सुनिर्विण्णो निर्जगाम ततो गृहात् ॥ ३३ ॥

---

यत एवं नानाक्लेशदो देहस्तर्हि कथङ्कारं स निवर्तेत इति तत्राह—तस्मादिति । तस्माद् देहस्य क्लेशकरत्वात् त्वं द्वैते देहे ध्रुवार्थविस्रम्भं त्यजेत्यन्वयः । अन्यापेक्षारहितत्वाद्धरिरद्वैतम् । अदृष्टाद्यन्यापेक्षाप्राप्तत्वाद् द्वैतं देहादि । तत्रैते पदार्था ध्रुवत्वान्नित्या[3] इति विश्वासं त्यज । 'अनन्यापेक्षतस्त्वेको हरिरन्यद् द्वयं स्मृतम् । अन्यापेक्षत्वतस्तेन प्राप्तत्वाद् द्वैतमुच्यते' इति वचनात् । देहिनो यत्किञ्चित् साधने द्वितीयत्वेन प्राप्तत्वाद् द्वैतशब्दवाच्यो देह इत्यर्थः । नैतवता पूर्यत इत्याह—उपशमेति । अहं कर्तेत्यभिमानोपशममाविशेत्यन्वयः । किञ्च हरौ निरन्तरनिष्ठालक्षणमुपशममुक्तार्थदार्ढ्यायाह—विमृश्येति । आत्मनो हरेर्गतिं स्वातन्त्र्यादिलक्षणाम्, आत्मनो जीवस्यास्वातन्त्र्यादिलक्षणां चेति । केनेत्यत उक्तम्—मनसेति । तस्य प्रागपि सद्भावात् कुत ईदृशविचाराभाव इति तत्राह—स्वस्थेन इति ॥ ३० ॥

शास्त्रश्रवणमननशाणलीढेन[4] भक्त्यादिसाधनसामग्रीसंपादनेन गृहादिसंत्यागः प्रथमसाधनमित्यत्रेतिहासमाह—भोजो नामेति । शत्रुणा ग्रस्तं कवलितं यदन्नं तदेव भोजनं यस्य स तथा । शत्रूच्छिष्टान्नभक्षण इत्यर्थः ॥ ३१ ॥ पूर्वं पुरातनं वैरं गृह्णन्तीति पूर्ववैरग्रहाः तैः । कर्मभिः पूर्वैः वैराख्यग्रहैः ॥ ३२ ॥ दुरन्तदुःखानामोघो यस्मिन् स तथा, तस्मात् स्वप्नात् । तत् स्वप्नानुभूतम् । तावत् तदनीमेव ॥ ३३ ॥

---

[1] विधिषु स्थितान्—चेट्टी

[2] जायाम्—चेट्टी । तथाहि तद्व्याख्यानम्—केचित् शत्रवः तस्य भोगानुपभोगसाधनानि प्रमादेशानानि विलुलुपुर्विनाशितवन्तः । अपरे शत्रवो विधिषु स्थितान् राजनियोगेषु वर्तमानान् पुरुषान् अहरन् । केचित् जायामहरन् । अन्ये शत्रव आत्मनो भोजस्य शिरोऽहरन् । सर्वत्रापि कारणमाह—पूर्वेति । पूर्ववैरानुस्मरणैरित्यर्थः । पूर्वं वैरं गृह्णन्तीति तथा तैः कर्मभिरिति वा—इति ।

[3] ध्रुवार्था नित्या इति पाठः स्यात् ? [4] मनसा युक्तेन पुरुषेणेत्यध्याहार्यं स्यात् ?

दर्शयन्नात्मनाऽऽत्मानं निस्सङ्गः शान्तविग्रहः ।
प्रविष्टो ब्रह्म निर्वाणं कुलायं नाविदच्च तम् ॥ ३४ ॥

नारद उवाच —

इमां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम ।
यां धारयन् सप्तरात्राद् द्रष्टा संकर्षणं विभुम् ॥ ३५ ॥

यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे
शर्वादयो भ्रममिमं द्वितयं विसृज्य ।
सद्यस्तदीयमतुलानधिकं महित्वं
प्रापुर्भवानपि परं न चिरादुपैति ॥ ३६ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे पञ्चदशोऽध्यायः ।

---

आत्मानमुन्मत्तादिवद् दर्शयन् । आत्मना मनसा आत्मानं दर्शयन्नालोचयन्निति वा । निर्वाणं 'अशरीरेणाजन्थानन्दपूर्णम्[1] । ब्रह्म श्रीनारायणाख्यम् । प्रविष्टो, मनसेति शेषः । यस्मिन् कुलाये देहे स्थितः तं कुलायं नाविदत् न बुबुधे चशब्दो हेत्वर्थः । असंप्रज्ञात समाधिस्थत्वाद्वा मुक्तत्वाद्वा ॥ ३४ ॥

ममाप्येवंविधोपायावस्थाम्[2] आप्तु क उपाय इति तत्राह—इमामिति । मन्त्राख्योपनिषच्चिरकालेन साध्यसाधिका चेत्[3] किमनयेत्यश्रद्धां मा कार्षीरित्याह — यामिति । 'रुद्राद्याः शेषदेहस्थं विष्णुं सङ्कर्षणाभिधम् । शेषान्तर्यामिणं ज्ञात्वा स्वपदं प्रापुरञ्जसा' इति वचनात् न शेषः सङ्कर्षणोऽत्र गृह्यते । किन्तु तदन्तर्यामी द्वितीयमूर्तिः । अन्यस्य बन्धनिर्मूलनादिसामर्थ्याभावात् तदुच्यत[4] इति ॥ ३५ ॥

सङ्कर्षणं शेषान्तर्यामिणं संभावितैर्विशेषणैर्विशिनष्टि— यत्पादेति । पूर्वे शर्वादयो यत्पादमूलमुपसृत्योपास्य महित्वं प्रापुरित्यन्वयः । महित्वं नाम कीदृशं येन हरिप्रसादप्राप्तं स्यादित्यत उक्तम्—अतुलेति । अतुलं च तदनधिकं चेति तथोक्तं साम्याधिक्यवर्जितमित्यर्थः । ननु तर्हीदं भगवन्माहात्म्याविनाभूतं स्यादिति तत्राह—तदीयमिति । तेषां रुद्रादीनां योग्यम् । ननु स्वकीयप्राप्तौ क्लेशसाध्यायाः किमन्योपासनायाः प्रयोजनं स्वतःसिद्धत्वात् तस्येत्यस्याप्येतदेवोत्तरम् । तत्प्रसादलभ्यत्वात् तदीयमिति । तदीयं तस्य

---

[1] शरीरेणेति स्यात । [2] एवंविधावस्थाम् इति यावत् । [3] साध्यसाधिका च—ब
[4] बन्धनिर्मूलनादिसामर्थ्याभावादिति—ब

हरेरधीनम् । तदुक्तम्—'तेषां तेषां पदान्येव वैष्णवानि पदानि तु । तेषां महित्वं च तथा हरेस्तद्वशगं यतः' इति । भगवन्महित्वादन्यमहित्वस्य साम्याधिक्यस्य वर्जनं कथं घटत इत्यस्यापीदमुत्तरम् । तस्मादिन्द्रादिपदाद् रुद्रादिप्राप्यशेषादिपदस्य साम्याधिक्यवर्जनं युक्तम् । किञ्च शेषादिप्राप्यशेषादिपदस्य मौक्तिकस्य संसारे शेषादिपदमपेक्ष्यातुल्यानाधिक्यं च युक्तिमत् । 'अतुल्यानाधिकं चैव तस्य तस्यैव मुक्तिगम् । तस्यैव पूर्वमाहात्म्यमपेक्ष्य' इति वचनात् । ननु 'परमं साम्यमुपैति' इति श्रुतेः हरेरेवातुल्यानधिकमहित्वं प्रापुरित्यर्थः किं न स्यात् ? अत्रापीदमेव प्रतिवचनम् । तस्य विद्यमानं पदमापुः । न हरेर्विद्यमानं निजमहित्वम् । तदुक्तं च 'न हरेः क्वचित् । माहात्म्यमन्यप्राप्यं स्यान्न ते विष्णविति श्रुतेः' इति । रुद्रादिप्राप्यं न चेद् ब्रह्मादिप्राप्यं किं न स्यादिति चेन्न । 'ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते । तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरिः'[1] इति प्रमाणविरोधात् । अत्रोपास्तावित्थंभावमाह—भ्रममिति । इमं देहाद्यहंममाभिमानलक्षणं भ्रमं विहाय । आचार्यैरप्येतदुक्तम्—'देहादावहंममाभिमानो भ्रमः' इति । बन्धस्य त्यागमन्तरेण तत्प्राप्तिः कथं युक्तिमतीति तत्राह—द्वितयमिति । 'कार्यकारणयोरेकशब्दव्यवहृतिर्भवेत्' इति न्यायात् कारणेन कार्यं लक्ष्यते । द्वितीयेनान्यथाज्ञानेन निर्मितं बन्धं पुत्रादिस्नेहलक्षणं विसृज्य सम्यक् त्यक्त्वा । तदुक्तम्—'द्वैतेन बन्धसन्त्यागात् द्वैतत्यागी भवत्युत' इति । द्वैतेनोत्पन्नबन्धसन्त्यागादित्यर्थः । अनेन मुक्तावपि शेषादिप्राप्यं पदमिति ध्वनितमिति ज्ञातव्यम् । साधनसामग्र्यां कालक्षेपो नास्तीत्याह—सद्य इति । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते' इति श्रुतेः । अनेन चित्रकेतोः किमागतम् ? अत्राह—भवानपीति । भवानपि तमनन्तमुपास्य दृष्ट्वा तत्प्रसादेन न चिरात् स्वकर्मनिर्मितचरमशरीरपातानन्तरं तत्प्रसादलभ्यत्वात् तदीयमपि तेन पूर्वमहिम्ना तुल्यमनधिकं च परमन्यत् रुद्रादिमहित्वाविलक्षणं निर्दुःखानन्दानुभवलक्षणं स्वयोग्यमाहात्म्यमुपैतीत्यन्वयः । 'यद्येषोपरत देवी माया वैशारदी मतिः । संपन्न एवेति विदुर्महिम्नि स्वे महीयते' इति स्मृतिवचनात् ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे पञ्चदशोऽध्यायः ।

---

[1] केवलो हरे—च

## ॥ अथ षोडशोऽध्यायः ॥

श्रीशुक उवाच —

अथ देवऋषी राजन् सम्परेतं नृपात्मजम् ।
दर्शयित्वेति होवाच ज्ञातीनामनुशोचताम् ॥ १ ॥

नारद उवाच —

जीवात्मन् पश्य भद्रं ते मातरं पितरं च ते ।
सुहृदो बान्धवांस्तप्तान् शुचा त्वत्कृतया भृशम् ॥ २ ॥

कलेवरं स्वमाविश्य शेषमायुः सुहृद्वृतः ।
भुङ्क्ष्व भोगान् पितृप्राप्तानधितिष्ठ नृपासनम् ॥ ३ ॥

जीव उवाच —

कस्मिन् जन्मन्यमी मह्यं पितरो मातरोऽभवन् ।
कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु ॥ ४ ॥

बन्धुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः ।
सर्व एव हि सर्वेषां भवन्ति क्रमशो मिथः ॥ ५ ॥

यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः ।
पर्यटन्ति नरेष्वेवं जीवो योनिषु कर्तृषु ॥ ६ ॥

---

## ॥ अथ षोडशोऽध्यायः ॥

संसारस्य [1]पुत्रमित्रादिलक्षणनियतत्वं संसारिचेतनस्य हरिनियतनित्यत्वं परमचेतनस्य परमनित्यत्वं, तज्ज्ञानमेव पुरुषार्थसाधनमित्यादिकमस्मिन्नध्याये निरूप्यते । अत्र नारदो योगमाहात्म्यं विद्योतयन् राजकुमारमुत्थाप्येवं वक्तीत्याह — श्रीशुक इति ।

[2]एवं जीवात्मना किमवादीत्याह — कस्मिन्निति[3] ।

पण्यानि विक्रेयानि । नरेषु विक्रेतृषु । रेतस्सेककर्तृषु पित्रादिषु । योनिषु मातृषु । [4]कर्तृष्विति वा ॥ ६ ॥

---

[1] पुत्रमित्रादिलक्षणस्यानित्यत्वमिति स्यात् ?    [2] एवमित्यस्यान्वयो न व्यक्तः ।

[3] तदेव कलेवरं प्रविश्योपस्थितो जीव उवाच । यद्वा अन्तराले प्रेतशरीरे स्थित्वोवाचेति ज्ञेयम् — चेट्टी

[4] अस्यान्वयो न ज्ञायते । नरेषु कर्तृषु विक्रेतृषु — स । नरेषु कर्तृषु व्यवहर्तृषु — चेट्टी । तदा योनिष्वित्यस्य नानायोनिष्वित्यर्थः ।

नित्यस्यार्थस्य संबन्धो ह्यनित्यो दृश्यते नृषु ।
यावद् यस्य हि संबन्धो ममत्वं तावदेव हि ॥ ७ ॥

एवं योनिगतो जीवः स नित्यो निरहंकृतः ।
यावद् यत्रोपलभ्येत तावत् स्वत्वं हि तस्य तत् ॥ ८ ॥

एष नित्योऽव्ययः सूक्ष्म एकः सर्वाश्रयः स्वदृक् ।
आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ॥ ९ ॥

न ह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ।
एकः सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः ॥ १० ॥

---

ननु तर्हि हाटकादिवदनित्यत्वमापतितं जीवस्येत्याशङ्क्य संबन्धस्यैवानित्यत्वं न तु जीवात्मन इत्याह—नित्यस्येति । यथा संबन्धस्यानित्यत्वं तथा मम पुत्रोऽयमिति ममत्वमप्यनित्यमित्याह—यावदिति । हिशब्दाभ्यां प्रत्यक्षादिप्रमाणसिद्धत्वं दर्शयति । एवशब्देनायोगव्यवच्छेदं करोति ॥ ७ ॥

निरहंकृत इति स्वभावाख्यानम् । यत्र योनिषु । स्वत्वं स्वकीयत्वम् ॥ ८ ॥

ननु तर्हि केन सहास्य नित्यसंबन्ध इति तत्राह—एष इति । य आत्ममायया गुणैः स्वाधीनप्रकृतिर्गुणैर्विश्वं परावरं जगत् सृजति आत्मानं चावताररूपेण व्यनक्ति स एषः सर्वाश्रयः सर्वैर्नित्यसंबद्ध इत्यन्वयः । अनित्यत्वात् कथं घटत इत्यत उक्तम्—नित्य इति । कोऽर्थ इत्यतः—अव्यय इति[1] । अनेन नित्यशब्दो व्याख्यातः । अनुपलब्धौ हेतुमाह—सूक्ष्म इति । न चायं जीववद् बहुत्वसङ्ख्योपेत इत्याह—एक इति । मुख्यत एकत्वसंख्याविशिष्ट इत्यर्थः । सृष्टौ प्रवर्तमानस्य सृज्यसंबन्धेन ज्ञानलोपो नास्तीत्याह—स्वदृगिति । स्वरूपभूतज्ञानस्यापि प्रबलप्रतिबन्धकेनाभिभवः किं न स्यादित्यत आह—प्रभुरिति । अनेन हरिणा नित्यसंबन्धः पित्रादिभिरनित्य इति ज्ञापितम् । 'अनित्यसंबन्धयुताः पित्राद्या नित्ययुग्घरिः' इति वचनात् ॥ ९ ॥

एवंविधस्य हरेर्योग्यतातिरेकेण न क्वापि प्रियाप्रियौ स्त इत्याह—न हीति । कुतोऽतिप्रियाद्यभाव इति तत्राह—सर्वेति । गुणदोषयोः कर्तॄणां पुरुषाणां स्त्रीणां च सर्वासां धियां कुशलाकुशलसाक्षित्वेन तदनुसारेण फलदातृत्वादतिप्रियाद्यभाव इत्यर्थः । द्वितीयसद्भावे तद्भयात् कस्मिंश्चिदतिप्रियत्वादिसंभवति । न हि हरेस्तादृशोऽस्तीत्यभिप्रेत्याह—एक इति ॥ १० ॥

---

[1] न व्येतिजीवं विहाय नागच्छतीत्यव्ययः—चेट्टी

नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम् ।
उदासीन इवासीनः परावरदृगीश्वरः ॥ ११ ॥

श्रीशुक उवाच —

इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा ।
विस्मिता मुमुचुः शोकं छित्वाऽऽत्मस्नेहशृङ्खलाम् ॥ १२ ॥

निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः ।
तत्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम् ॥ १३ ॥

बालघ्न्यो व्रीडितास्तत्र बालहत्याहतप्रभाः ।
बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम् ।
यमुनायां महाराज स्मरन्त्यो द्विजभाषितम् ॥ १४ ॥

स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः ।
गृहान्धकूपान्निष्क्रान्तः सरःपङ्कादिव द्विपः ॥ १५ ॥

कालिन्द्यां विधिवत् स्नात्वा कृतपुण्यजलक्रियः ।
मौनेन संयतप्राणो ब्रह्मपुत्राववन्दत ॥ १६ ॥

---

साक्षित्वं स्पष्टयति — नेति । आत्मा परमात्मा । कथं गुणानादानं हरेः, 'षाड्वर्गिकं जिघ्रति षड्गुणेशः' इत्युक्तेः ? अत उक्तम् — हीति । हिशब्दो हेतौ । गुणोपभोगेन लोकवद् वृध्द्यभावो गुणानादानस्यार्थो न तु सर्वात्मना अभोक्तृत्वम् । तथात्वे 'भोक्ता सद्गुणभोक्तृत्वान्न भोक्ता तदवृद्धितः । अचिन्त्यशक्तितस्तच्च युज्यते परमेशितुः' इति स्मृतिविरोधः स्फुटः । उदासीन इव सर्वस्मादुत्तमत्वेन स्थित एव । भोक्तृत्वाभोक्तृत्वे लोकविरुद्धे हरेः कथं घटेते इत्यत उक्तम् — ईश्वर इति । परावरदृक्त्वमृषीणामप्यस्तीत्यत उक्तम् — उदासीन इति । तत्तद्वस्तुषु बाह्याभ्यन्तरवृत्त्या तिष्ठन्नेव परावरदृगित्यर्थः ॥ ११ ॥

ज्ञातयस्तस्मिन् जन्मनि सपिण्डाः । आत्मनां स्वेषां तस्मिन् पुत्रे स्नेहाख्यशृङ्खलां छित्वा ॥ १२ ॥

ज्ञातेः सपिण्डस्य तस्य देहं निर्हृत्य दग्ध्वा उचिताः क्रियाः श्राद्धादिलक्षणाः ॥ १३ ॥

तत्र चित्रकेतुः किं चकारेति तत्राह—स इत्थमिति ॥ १५ ॥

कृताः पुण्यजलैः क्रियास्तर्पणादिलक्षणाः येन स तथा ॥ १६ ॥

अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने ।
भगवान् नारदः प्रीतो विद्यामेतामुवाच ह ॥ १७ ॥

नारद उवाच —

नमस्तुभ्यं भगवते वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥ १८ ॥

नमो विज्ञानमात्राय परमानन्दरूपिणे ।
आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये[1] ॥ १९ ॥

आत्मानन्दानुभूत्यैव सम्यक्त्यक्तोर्मये नमः ।
हृषीकेशाय महते नमस्तेऽनन्तमूर्तये ॥ २० ॥

[2]वचस्युपरते प्राप्य य एको मनसा सह ।
अनामरूपचिन्मात्रः सोऽव्यान्नः[3] सदसत्परः ॥ २१ ॥

यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ।
[4]मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥ २२ ॥

---

अथ तयोर्ब्रह्मपुत्रयोर्मध्ये नारदः । हेत्यनेनाधिकारगुणसंपन्नस्य विद्योक्तफलं साकल्येन फलतीति ध्वनयति ॥ १७ ॥

चित्तसन्निहितं संबोध्य तुभ्यं नम इति वक्ति । भगवत इत्यादिविशेषणानि गुणसामर्थ्यद्योतकानि यथासंभवमूह्यानि ॥ १८ ॥

नित्यं निवृत्ता द्वैतदृष्टिः स्वावतारादौ भेददर्शनं येन स तथा तस्मै । 'निवृत्तद्वैतवृत्तये' इति पाठे निवृत्तेन द्वैतेनान्यथाज्ञानेन वृत्तिर्वर्तनं यस्य स तथा तस्मै । नित्यनिवृत्तदेहाद्यहंममाभिमानायेत्यर्थः ॥ १९ ॥ सम्यक् त्यक्ताः षडूर्मयो यस्येति तस्मै । यद्वा अशनादिषडूर्मिरहिताय । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति श्रुतेः ॥ २० ॥

मन्त्रमुपदिशन् ध्यानप्रकारमाह — वचसीति । वाङ्मनसा सह वचस्युपरते, नष्टे चिन्मात्रमनसा सह प्राप्यः । सदसत्परः स्थूलसूक्ष्मप्रपञ्चविलक्षणः ॥ २१ ॥

अलौकिकवस्तुनो लक्षणमन्तरेण तज्ज्ञानं दुस्साध्यमिति तल्लक्षणमाह — यस्मिन्निति । इदं जगद् यस्मिंस्तिष्ठत्यप्येति च । यतश्च जायते । अत्र दृष्टान्तमाह — मृन्मयेष्विति । 'जातिः सामान्य-

---

[1] निवृत्तद्वैतवृत्तये — वि [2] मनस्युपरते — स [3] सोऽव्ययः — स

[4] मृण्मयेष्विति पाठो मूले टीकायां च बहुकोशेषु दृश्यते ।

यत्र स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः ।
अन्तर्बहिश्च विततं व्योमवत् तं नतोऽस्म्यहम् ॥ २३ ॥
देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मसु ।
नैवान्यदा लोहमिव प्रतप्तं स्थानेषु तद् द्रष्टृपदेशमेति ॥ २४ ॥ भि

ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविन्दयुगल परम परमेष्ठिन् नमस्ते ॥ २५ ॥

श्रीशुक उवाच —

भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः ।
ययावङ्गिरसा साकं धाम स्वायम्भुवं विभो ॥ २६ ॥
चित्रकेतुस्तु विद्यां तां यथा नारदभाषिताम् ।
धारयामास सप्ताहमब्भक्षः सुसमाहितः ॥ २७ ॥
ततश्च सप्तरात्रान्ते विद्यया धार्यमाणया ।
विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृपः ॥ २८ ॥
ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः ।
जगाम देवदेवस्य शेषस्य चरणान्तिकम् ॥ २९ ॥

---

जन्मनोः ' इत्यभिधानात्, मृदो जातिर्जन्म यस्य वृक्षादेः स तथा । यथा वृक्षादिराधिर्मृन्मयेषु मृद्विकारेषु पृथिवीपर्वतादिषु तिष्ठत्यप्येति तेभ्यो जायते च तथा । मृज्जातिर्मृत्त्वं मृन्मयेषु घटादिष्विवानुगतमित्यर्थो ब्रह्मणो बहुत्वाभावात् ' एकमेवाद्वितीयं ब्रह्म ' इति श्रुतेः, ' पृथिवी पर्वताश्चैव मृन्मयाः समुदीरिताः । तेषु मृज्जातयः सर्वे जायन्ते स्थावरादयः ' इत्यनेन विरुद्धत्वाच्चानुपपन्नः ॥ २२ ॥ मनोबुद्धीन्द्रियासवः मनआदिशब्दवाच्याः रुद्रादयो देवाः ॥ २३ ॥

भगवदनुग्रहभावाभावौ तद्विषयकज्ञानाज्ञानकारणमित्युक्तम् । तत् स्पष्टमाह—देहेति । यस्य हरेरंशैर्विद्धाः प्रेरिता देहेन्द्रियाद्यभिमानिनो देवा ज्ञानादिकर्मसु प्रचरन्ति प्रवर्तन्ते । अन्यदा यदंशप्रेरणाभावे नैव प्रवर्तन्त इत्यन्वयः । कथमिव ? प्रतप्तमन्तर्निहितवह्निसामार्थ्याल्लोहो दाहकारणं प्रवर्तते । अप्रतप्तं न हि । अहं तद् ब्रह्म शरणमेमि । कीदृशम् ? देहेन्द्रियादिस्थानेषु स्थितम् । द्रष्टृपदेशं साक्षिनाम ॥ २४ ॥

ननु विष्णूपासनया शेषसमीपगमनं कथं सङ्गच्छत इतिचेदुच्यते । तत्तद्देवान्तर्यामिविष्णुविषयोपासनया तत्तद्देवसमीपप्राप्त्युपपत्तेः । ' अन्यान्तर्यामिणं विष्णुमुपास्यान्यसमीपगः । भवेद् योग्यतया तस्य

मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकङ्कणम् ।
प्रसन्नवक्त्रारुणलोचनं वृतं ददर्श सिद्धेश्वरमण्डलैः प्रभुम् ॥ ३० ॥

तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वस्थामलान्तःकरणोऽभ्ययान्मुहुः ।
प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमा तमनादिपूरुषम् ॥ ३१ ॥

स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपसेचयन् मुहुः ।
प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत् तं प्रसमीडितुं चिरम् ॥ ३२ ॥

ततः समाधाय मनो मनीषया बभाष एतत् प्रतिलब्धवाग्रसः ।
नियम्य सर्वेन्द्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम् ॥ ३३ ॥

---

पदं वा चाप्नुयान्नरः ॥' इत्युक्तेः । अनेन तत्तत्पदप्राप्तियोग्यश्चेत् सुतरां तत्तद्देवसमीपं गत इत्युक्तं भवति'[1] । तस्मादत्र चित्रकेतोरनेन प्रत्यक्षविधानेन मुहुर्मुहुः शेषस्य सकाशमभ्ययादिति युज्यते'[2] । चित्रकेतुना शेषान्तर्यामिविष्णुरुपासित इति कुत इति चेत्, 'शेषान्तर्यामिणं विष्णुं चित्रकेतुरुपास्य तु । शेषाविष्टहरेश्चापि वरान् प्राप्याप तद्गतिम्' इति वचनबलात् ॥ २९ ॥

शितिवाससं नीलवस्त्रम् । कटित्रं काञ्चीगुणम् । 'कटिसूत्रं सरसनं कटित्रं कटिभूषणम्' इत्यभिधानात् ॥ ३० ॥

अनस्य वायोरादिः कारणं पूरुषं पौरुषं यस्मिन् तथा तम् ॥ ३१ ॥

उत्तमश्लोकस्य शेषान्तर्यामिणो हरेः पादपद्मयोः विष्टरं पीठम् ।

उपरुद्धोऽखिलानां वर्णानां शब्दोपलक्षणानां निर्गमो द्वारं यस्य सः'[3] ॥ ३२ ॥

मनीषया धृतिरूपया प्रज्ञया । प्रतिलब्धः सम्यक् प्राप्तो वाग्रसो वचनवीर्यं येन स तथा । सात्वतानां शास्ता विग्रहस्तत्वोपदेशविशेषो यस्य स तथा तम्'[4] । सर्वेन्द्रियाणां बाह्येषु विषयेषु वर्तनं व्यापारम् ॥ ३३ ॥

---

[1] इदं न तात्पर्यानुगुणम् । वस्तुतस्तु यदन्तर्यामितया विष्णुरुपास्यते तत्सामीप्यप्राप्तिर्भवत्युपासकस्य । उपासकस्तत्पदयोग्यश्चेत् तत्पदमेव प्राप्नोति । शेषपदायोग्यश्चित्रकेतुः शेषसामीप्यं प्राप । शेषपदयोग्यो रुद्रस्ततत्पदमेवाप्नोतीति भावः ।   [2] अस्पष्टमिदम् ।

[3] अखिलवर्णानां सामस्त्येनार्थबोधकतया निर्गमो बहिर्निःसरणं प्रेम्णोपरुद्धः प्रतिबद्धो यस्य स तथा—स. चेट्टी आचार्यास्तु निर्गतमिति पाठं स्वीकृत्य निर्गमनमिति व्याचक्रुः ।

[4] सात्वतानां भक्तानां शास्तीति शास्त्रमन्तर्नियामको विग्रहो यस्य तम् । अन्तर्यामिविवक्षयेदम् । यद्वा सात्वत शास्त्रं भगवान्, तस्य विग्रहरूप इति—स । सात्वतानां स्वभक्तानां शास्ता सन्मार्गशिक्षको विग्रहोऽवतारो यस्य तम्—चेट्टी

चित्रकेतुरुवाच —

अजित जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता ।
विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ३४ ॥

तव विभवः खलु भगवन् जगदुत्पत्तिस्थितिलयादीनि[1] ।
विश्वसृजस्तेंऽशांशास्तत्र मृषा स्पर्धन्ति पृथगभिमत्या ॥ ३५ ॥

परमाणुपरममहतोस्त्वमाद्यन्तान्तरवर्ती त्रयविधुरः ।
आदावन्ते च सत्त्वानां यद् ध्रुवं तदेवान्तरकालेऽपि ॥ ३६ ॥

क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैराण्डकोशः ।
यत्र भगवत्यणुभ्योऽणुकल्पः सहाण्डकोटिभिस्तदनन्तम् ॥ ३७ ॥

---

हे अजित अतिकरुणो यस्त्वमकामानां भजतां साधूनामात्मदो यस्मादतस्ते साधवोऽपि भवता विजिताः । किञ्च जितमनस्कैः समबुद्धिभिः साधुभिर्भवानपि जितो वशीकृतः । चशब्दो नियतत्वं सूचयति[2] ॥ ३४ ॥

तत्सत्त्वे प्रमाणमाह—तवेति । जगदुत्पत्त्यादीनि, तव विभवः स्वरूपलक्षणानि खलु यस्मात् ततस्तत्र तस्यामवस्थायां शास्त्रेण स्थितायां ते भिन्नांशाः[3] विश्वसृजोऽहं जगदीश्वरो जगत्स्रष्टेति पृथग् जगदीश्वरत्वाभिमानेन मृषा निष्प्रयोजनं स्पर्धन्तीति व्यत्यासेन[4] हरेर्माहात्म्यस्यानन्तत्वं दर्शयति ॥३५॥

'तव विभव' इत्यादिना गुणानन्त्यमुक्तम् । अधुना कालदेशानन्त्ये[5] आह— परमाण्विति । त्वं त्रयविधुरः अणुमहन्मध्यमपरिमाणरहितोऽपि स्वतः प्राकृतपरिमाणाभावात् परमाणुपरममहतोरादावन्तेऽन्तरे च वर्तितुं शीलमस्यास्तीति आद्यन्तान्तरवर्ती । (भवान्) परमाणुलक्षणकालावयवस्य[6] परममहत्कालावयवस्य च मध्यकालावयवस्य च वर्तत इति । सत्त्वानामित्युपलक्षणम् । घटादीनामप्यादावुत्पत्तेः पूर्वम्, अन्ते प्रध्वंसादूर्ध्वं च यत् ते स्वरूपं ध्रुवं अव्यभिचारि तदेवान्तरकालेऽपि वर्तत इति शेषः ॥ ३५ ॥

य अण्डकोशो दशगुणोत्तरैः सप्तभिः क्षित्यादिभिरावृतः स एषोऽण्डकोटिभिः सह यत्र भगवति

---

[1] जगदुद्भवस्थितिलयावनादीनि—स

[2] चस्त्वर्थः सन् तव तत्पराभवनं स्वाभाविकं तत्कर्तृकपराजयस्तु भजनमात्रमिति विशेषसूचकः —स

[3] विश्वसृजस्ते भिन्नांशा अहं जगदीश्वर इत्यादि मृषा स्पर्धन्तीत्यन्वयः ।

[4] स्पर्धतेः परस्मैपदप्रयोगेगेत्यर्थः ।

[5] अस्मिन् श्लोके कालानन्त्यमुत्तरश्लोके च देशानन्त्यमुच्यत इति भावः ।

[6] अत्र षष्ठीत्रयं सप्तम्यर्थे । एतादृशकालत्रयावयवेष्वपि प्राकृतपरिमाणत्रयरहितस्य तव स्वरूपं वर्तत इति ।

विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् ।
तेषामाशिष ईश तदनु विनश्यन्ति यथाऽराजकुलम् ॥ ३८ ॥

कामधियस्त्वयीश रचिता न पुनरारोहन्ति[1] यथा करम्भबीजानि ।
ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि ॥ ३९ ॥

जितमजित तदा भवता यदाऽऽह भागवतधर्ममनवद्यम् ।
निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥ ४० ॥

विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च योऽन्यत्र ।
विषमधिया रचितः स ह्यशुद्धः क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥

---

अणुभ्योऽणुकल्पः सूक्ष्मात् सूक्ष्मतरो वर्तते तद्धरेः स्वरूपम् । अनन्तमिति हेतुगर्भविशेषणम् । अपरिच्छिन्नत्वादुचितमिति भावः ॥ ३७ ॥

एवं स्वरूपमुक्त्वाऽन्वयव्यतिरेकाभ्यां तज्ज्ञानफलमाह—**विषयेति** । विषयतृषः शब्दादिविषयतृष्णावन्तः अत एव नरपशवः । विभूतीर्ब्रह्मादिशब्दवाच्याः । परं तेषां पातारं ज्ञानादिपूर्तिप्रदातारं तेभ्योऽप्युत्तमम् । तदनु प्राप्तिसमनन्तरं किञ्चित्कालं फलानुभवानन्तरं वा । 'तद्यथास्यान्ततः क्षीयत एव' इति श्रुतेः । अराजकुलं पालकेन राज्ञा शून्यो जनसमुदायः । धर्मविरुद्धानां राज्ञां कुलं वा ॥ ३८ ॥

कामधियः शब्दादिगुणविषयज्ञाना अगुणमये प्रकृतिगुणविकृतदेहादिशून्ये ज्ञानात्मनि रचिताः त्वद्विषयत्वेनार्पिताः यदि स्युः तर्हि पुनर्नारोहन्ति नोत्पद्यन्ते । करम्भबीजानि भर्जितधान्यानि । गुणगणतो विषयसमूहादस्य जगतो द्वन्द्वजालानि सुखदुःखादीनि भवन्तीति शेषः ॥ ३९ ॥

दुःखात्मकसंसारनिवृत्तिः केन स्यादित्याशङ्क्य भागवतधर्मानुष्ठानेन तन्निवृत्तिः स्यादित्याशयवानाह—**जितमिति** । हे अजित भवान् यदा अपवर्गाय मुनयो यं धर्ममुपासते तं भागवतधर्ममाह, तदा भवता संसरस्वरूपं जितम् । भागवतधर्मकथनेन भक्तानां संसरजयोपायो दर्शित इत्यर्थः ॥ ४० ॥

तद्धर्मज्ञानेन किं फलमिति तत्राह—**विषमेति** । यस्मिन् धर्मे ज्ञाते नृणां त्वमहमित्यादिलक्षणा विषममतिः शास्त्रनिषिद्धबुद्धिर्न स्यात् । चकारादीश्वराधीनं सर्वं, तत्प्रेरितोऽहं कार्येषु

---

[1] न पुना रोहन्ति – स

कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ।
स्वद्रोहात् तव कोपः परसंपीडया च तथाऽधर्मः ॥ ४२ ॥

न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ।
स्थिरचरसत्वकदम्बेष्वपृथग्धियो यमुपासते त्वार्याः ॥ ४३ ॥

---

प्रवृत्तोऽस्मीति बुद्धिः (स्यात्) इत्यर्थः । येन धर्मेण यस्मिन् त्वयि ज्ञाते वा । हरेरन्यत्र विपर्यधिया यथास्थितवस्तुविपरीतज्ञानेन रचितः कृतः तन्मय इत्यर्थः । अत एव अहंममतादिप्रचुर इत्यर्थः[1] ॥ ४१ ॥

तज्ज्ञानफलं तम एवेत्याह—**क इति** । ननु तर्हि यागादिकर्मलक्षणधर्मेण पुरुषार्थः स्यादिति तत्राह—**निजेति** । स्वस्य शरीरक्लेशस्य हेतुना परस्य संज्ञपनलक्षणहिंसाहेतुना । कुतो नास्तीति तत्राह — **स्वद्रोहादिति** । स्वविहितशरीरक्लेशं विनाऽऽत्महत्यादिद्रोहात् तवाज्ञालङ्घनलक्षणात्[2] ॥ ४२ ॥

ननु शिवादिविहितवत् त्वद्विहितस्यान्यथात्वेन त्वद्विहितलक्षणाज्ञातिलङ्घनदोषनिमित्तकोपाभावोपपत्तेरतस्त्वत्प्रेक्षाऽपि व्यभिचारिण्येवेति तत्राह[3]—**नेति** । तत्र को हेतुरिति पूर्वोक्तं स्मारयति—**यमिति** । पूर्वस्माद् विशिनष्टि—**अपृथगिति** । कुत्रेत्यत उक्तम्—**स्थिरेति** । स्थावरजङ्गमप्राणिसमूहेषु यथास्थितदर्शिनः । तद् युक्तमित्याह–**आर्या इति** । तुना तारतम्यमन्ययोगव्यवच्छेदं चाह ॥ ४३ ॥

---

[1] अनवद्यधर्ममेवाह—विषमेति । यत्र यस्मिन् भागवते धर्मेऽनुष्ठिते सति त्वं कर्ताऽहं कर्तेति ममेदं तवेदमिति च विषमबुद्धिर्नृणां न भवति । किन्तु भवानेव सर्वकर्ता सर्वस्वामीति च बुद्धिर्भवतीत्यर्थः । अनवद्यपदव्यावर्त्यमाह—य इति । अन्यत्र भगवदविषयकः, विषमधिया स्वर्गादिफलकामनया स्वस्वातन्त्र्यभ्रमेण, विरचितोऽनुष्ठितो यो धर्मो ज्योतिष्टोमादिलक्षणः, स ह्यविशुद्धः रागादिमत्त्वात्, क्षयिष्णुश्च नश्वरफलत्वात्, अधर्मबहुलश्च हिंसादिबाहुल्यादित्यर्थः—चेट्टी

[2] एतदेव प्रपञ्चयति—क इति । धर्मेण काम्यकर्मणा निजपरयोः स्वस्य परस्य च कः क्षेमः किं कुशलम् ? न किंचित् । न केवलं क्षेमाभावः किन्त्वनर्थोऽपि भवेदिति भावेन धर्मं विशिनष्टि–स्वेति । स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक्, तेनेत्यर्थः । तदुक्तं प्रकाशिकायाम्—स्वकामं तु तपः क्रूरं लोकानां क्षोभकृद् भवेत् । इतरच्छान्तये सर्वलोकानां भवति ध्रुवम् इति । भवतु काम्यकर्मिणः स्वपरद्रोहः, ततः किम् ? तत्राह—स्वेति । स्वद्रोहात् परपीडया चाधर्मो भवति तेन च तव कोपो भवतीत्यर्थः । अतो भागवतधर्मा एवानवद्या इति भावः—चेट्टी

[3] अस्पष्टमिदम् । भगवद्विहितभागवतधर्मस्य, शिवादिविहितकाम्यधर्माद् वैलक्षण्ये हेतुमाह—नेति इति वाऽवतार्यः श्लोकः ।

न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नामसकृच्छ्रवणात् पुल्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥

अथ भगवन् वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ।
सुरऋषिणा यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥

विदितमनन्त समस्तं तव जगदात्मनो जनैरिहाचरितम् ।
विज्ञाप्यं परमगुरोः कियदिह सवितुरिव खद्योतैः ॥ ४६ ॥

नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ।
दुरवसितात्मगतये कुयोगिनां नमः परमहंसाय ॥ ४७ ॥

---

प्रारब्धवशादार्या अपि उपास्तिं कुर्वन्ति । न फलोपलब्ध्या । 'तस्मादिदमघटीयमानमर्चयन्तीति तत्राह—नहीति ॥ ४४ ॥

नेह[2] संसारतरणे सकृन्नामश्रवणमेवालं, किं पुनः ? भवद्दर्शनमिति यस्मादथ तस्मात् त्वद्दर्शनेनाधुना वयं परिमृष्टाशयमलाः, अभूमेति शेषः । नारदवाक्यं च भगवदीक्षाया अव्यभिचरितत्वे लिङ्गमित्याह[3]—सुरऋषिणेति ॥ ४५ ॥

हे अनन्त तावकेन नारदेन समस्तं विदितं ज्ञातम् । भगवज्ज्ञानमव्यभिचारीति यदुदितं च तत् कथमन्यथा भवति ? निगमयति—तवेति । जगदात्मनो जगदन्तर्यामिणः परमगुरोस्तव जनैश्चेष्टितं कियद् विज्ञाप्यम् ? न किमपीति भावः । विज्ञापनं हास्यहेतुरित्यत्र दृष्टान्तमाह—इहेति । इह ज्योतिष्षु प्रकृष्टप्रकाशस्य सवितुः खे वितस्तिप्रदेश एव द्योतः प्रकाशो येषां ते तथा तैः[4] ॥ ४६ ॥

अस्माभिरिदमेव विज्ञाप्यमित्याह - नम इति ॥ ४६ ॥

---

[1] तस्मादियमुपास्तिरघटमानेति तत्राह इति यावत् । [2] नेहेति 'च' कोषे नास्ति । नापेक्षितं चेति भाति ।

[3] अस्पष्टमिदम् । मम त्वद्दर्शनं नारदानुग्रहात् प्राप्तम् । 'यां धारयन् सप्तरात्राद् द्रष्टा संकर्षणं प्रभुम्' इति नारदवाक्यं कथमन्यथा भवतीत्यर्थः । त्वत्कृपापात्रस्य नारदस्यापीक्षा अव्यभिचारिणी किं पुनस्तवेति टीकाभिप्रायः स्यात् ।

[4] विस्तरतो यद् तव (नारदानुग्रह) वार्तामित्यत आह—विदितमिति । हे अनन्त अनन्तजनैराचरितं तव विदितम् । तत्र निमित्तम्—जगदात्मन इति । जगदन्तर्यामिणः । परमगुरोरस्माभिर्विज्ञाप्यं कियत् ? ज्ञानसर्वस्वस्य विज्ञापनमिद (मेव ?)मित्याह—सवितुरिवेति । सवितुः प्रकाशात्मकस्य सूर्यस्य पुरतः खद्योतैः स्वप्रकाशवर्णनं यथा न गुणप्रदं तथेति भावः—स

यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति
यं चेकितानमनु[1] वृत्तय उच्चकन्ति ।
भूमण्डलं सर्षपायति यस्य मूर्ध्नि
तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ ४८ ॥

श्रीशुक उवाच —
संस्तुतो भगवानेवमनन्तस्तमभाषत ।
विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ॥ ४९ ॥

श्रीभगवानुवाच —
यन्नारदाङ्गिरोभ्यां ते व्याहृतं मम शासनम् ।
संसिद्धोऽसि तया राजन् विद्यया दर्शनाच्च मे ॥ ५० ॥

---

इदमपि त्वदनुग्रहं विना न शक्यमित्याह — यं वा इति । 'श्वस प्राणने' इति धातोः । 'प्राणन्तमनु प्रणन्ति' इति श्रुतिर्वैशब्देन सूचिता । चेकितानम् अनुवृत्तयः तत्तद्वस्तुगतज्ञानवन्तः[2] । उच्चकन्ति सम्यग् जानन्ति । सर्षपायति सर्षपवद् वर्तते । श्रीहरिविवक्षायां 'सहस्रशीर्षा पुरुषः' इत्युपपत्तेः ॥ ४८ ॥

अनन्तनामप्रवृत्तिनिमित्तक्रियावत्त्वादनन्तः श्रीहरिः । हरिगुणान्तकथनदर्शनासमर्थत्वादनन्तः (शेषः) इत्यर्थः ॥ ४९ ॥

नारदाङ्गिरोभ्यां यन्मम शासनं तव व्याहृतं तत्करणेन, या च मम विद्याऽभ्यस्ता तया, यच्च मम दर्शनं तस्माच्च, संसिद्धोऽसि प्राप्तापेक्षिताशेषपुरुषार्थोऽसीत्यर्थः ॥ ५० ॥

अधुनाऽहं पूर्वोक्तस्थिरीकरणाय किञ्चिद्विशेषज्ञापनाय[3] वा किञ्चिदुपदिशामि इत्यभिप्रेत्याह— **अहमिति** । सर्वभूतानि अहमित्यन्वयः । वा इत्यनेन 'सर्वं खल्विदं ब्रह्म' इति श्रुतिं सूचयति । अभेदोपदेशस्य कोऽभिप्राय इति तत्राह — **भूतात्मेति** । भूतानामन्तः स्थित्वाऽऽदानादिकर्तृत्वात् तद्व्यपदेशः । 'हरिस्तु सर्वभूतानि तदन्तर्याम्यपेक्षया' इति स्मृतेः । सत्ताप्रदत्वाच्च तद्व्यपदेश इति भावेनाह— **भूतभावन इति** । भूतानि भावयति सत्तागतानि करोतीति । अनेन 'अहमस्मि' इत्यादि श्रुतिगतानि पदान्यन्तर्यामिणि मुख्यवृत्त्या प्रवर्तन्त इत्युक्तम्[4] । तथाचोक्तं 'तिङ्पदानि च सर्वाणि

---

[1] चेकितारमनु—स, चेकितारं ज्ञातारम्—स [2] चेकितानं जानन्तम् अनुवृत्तयः तत्तद्वस्त्वनुगतज्ञानवन्तः—व चेकितान जानन्तमनु वृत्तयः ज्ञानेन्द्रियाणि उच्चकन्ति स्फुटं पश्यन्ति—चैट्टी [3] .... ज्ञानाय—व

[4] अनेनेत्यारभ्यैतत्पर्यन्तवाक्यं सत्ताप्रदत्वाच्चेत्यादिवाक्यात् प्रागेवानुसन्धेयमिति भाति ।

अहं वै सर्वभूतानि भूतात्मा भूतभावनः ।
शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ॥ ५१ ॥

लोके[1]ऽविततमात्मानं लोकं चात्मनि सन्ततम् ।
उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ ५२ ॥

यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि ।
आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ ५३ ॥

---

सुप्पदानि तथैव च । तस्मिन्नेव प्रवर्तन्ते मुख्यवृत्त्या विशेषतः ' इति[2] । इदञ्च त्वयाऽवश्यं ज्ञातव्यमित्याह —शब्देति । वेदादिशब्दराशिलक्षणं शब्दब्रह्म सच्चिदानन्दलक्षणं परं ब्रह्मेत्युभे द्वे अपि ब्रह्मणी मम शाश्वती तनू प्रतिमास्वरूपभेदेन । 'यावद् ब्रह्म विष्ठितं तावती वाक्' इति श्रुतेः । 'एष नित्योऽव्ययः सूक्ष्मः' इति (च) पूर्वोक्तम्[3] ॥ ५१ ॥

आत्मानं जीवं लोके भुवने अविततमव्याप्तं जानीहि । लोकं चात्मनि जीवे वासनारूपेण मनसि निर्व्यूढं विद्धि । विपुलस्य लोकस्यात्मप्रदेशमन्तरेण बाहुल्यायोगात्[4] लोक आत्मेत्युभयं मया ब्रह्मरूपेण व्याप्तम् । तर्हि जीवलोकयोराधारः क इति तत्राह- -मयीति । उभयञ्च मयि समाश्रितमेव ? कुतः[5] ? अहमेवोभयाधार इति समाधत्स्व ॥ ५२ ॥

ननु 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च' इति श्रुतेः 'लोके विततमात्मानम्' इत्यस्य प्रतीतार्थ एव किं न स्यादित्याशङ्क्य[6] दृष्टान्तानुगुण्यात् कथ्यत इत्यभिप्रेत्याह—यथेति । यथा सुषुप्तः सन् स्वप्नमनुभवन् पुरुषः विश्वं वासनारूपेणात्मनि स्फुरितं च शब्दाद् भिन्नं पश्यति । स्वप्ने आत्मानमेकदेशस्थं मन्यते । न तु व्याप्तम् । स्वप्नादुत्थितः प्रबुद्धोऽपि खट्वादिशायिनं स्वं मन्यते । श्रुति-

---

[1] लोके विततमिति चेट्टी—अस्तु भगवानेतादृशमाहात्म्योपेतः, किं तत इत्याशङ्क्य जाग्रदाद्यवस्थानुभवितृत्वलक्षणबन्धस्यानादिविषयवासनावासितान्तःकरणमूलत्वात् तयोश्च मदधीनत्वात् तन्निवृत्त्यर्थं मामेवोक्तवक्ष्यमाणमाहात्म्योपेतत्वेनानुस्मर इत्यभिप्रेत्याह—लोक इति चतुर्भिः । आत्मानं मनोलोके स्वविषयेप्रपञ्चे विततं व्याप्तम् । स्मरेदिति तृतीयेनान्वयः, पश्येत्यध्याहारो वा इति ।

[2] तथा चोक्तमित्यारभ्यैतदन्तं वाक्यं प्रतिमास्वरूभेदेनेति वाक्यानन्तरमनुसन्धेयम् । सर्वशब्दानां ब्रह्मवाचकत्वकथनेन शब्दराश्यात्मकवेदस्य शाश्वतप्रतिमात्वोपपादकत्वात् ।

[3] अस्मिन्नेवाध्याये नवमे श्लोके । शाश्वतत्वे प्रमाणान्तरकथनमिदम् ।

[4] अस्पष्टमिदम् । विपुलस्य लोकस्याणीयसि मनस्याश्रितत्वायोगाद् वासनारूपेणाश्रितमिति तात्पर्यकारवचनसमर्थनमिदं स्यात् । [5] अतः इति स्यात् । अहमेवोभयाधार इति स्मरेदिति वा पश्येति वा योजना सुलभा ।

[6] लोके अविततमिति कुतश्चेत्तव्यमिति शङ्काभिप्रायः ।

एवं जागरणादीनि जीवस्थानानि चात्मनः ।
मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥

येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा ।
सुखं च निर्गुणं ब्रह्म तमात्मानमवैहि माम् । ॥ ५५ ॥

उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ।
अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत् परम् ॥ ५६ ॥

---

गतिस्तु परमात्मविषयत्वेन जीवचिद्गुणविषयत्वेन वा कल्प्यते[1] ॥ ५३ ॥

यथा स्वप्नावस्थायां भगवत्कर्तृकत्वं प्रामाणिकं 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रात्, तथा जाग्रत्प्रभृत्यवस्थाश्च, 'अतः प्रबोधोऽस्मात्' इत्यत[2] इत्यभिप्रेत्याह—**एवमिति** । यथा स्वप्नावस्था प्रकृतिशब्दवाच्येश्वरेच्छानिर्मिता तथा जीवस्य सुखोपभोगस्य स्थानानि जागरणादीनि मायामात्राणि भगवदिच्छालक्षणप्रकृतिनिर्मितानि विज्ञाय[3] तासामवस्थानां मध्ये निषण्णस्य जीवस्य सुखोपभोगस्य द्रष्टारं साक्षिणं परं ततो भिन्नं स्मरेदित्यन्वयः । 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः ॥५४॥

तद्द्रष्टारमित्यत्र जीवात्मनः परमात्मा सम्यग् विविच्य न प्रतीत इति तद्विवेकार्थमाह—**येनेति** । येन प्रसुप्तः प्रस्वापं प्रापितः सन् पुरुषो जीवात्मा तदा सुप्त्यवस्थायामात्मनः स्वापम् इयन्तं कालं किञ्चन नावेदिषमिति स्वापशब्दोक्तमेव ज्ञानं, सुखमहमस्वाप्समित्यनुभूतं सुखं च, सुखिनं स्वात्मानं च वेद, नान्यत् किञ्चिद् वेद तमात्मानं निर्गुणं ब्रह्म ज्ञानादिगुणपूर्णं मामवैहीत्यन्वयः ॥ ५५ ॥

इतोऽपि जाग्रदाद्यवस्थानुभविनो जीवाद् भिन्नं ब्रह्मेत्याह—**उभयमिति** । जाग्रत्सुप्तिश्चेत्युभयं स्मरतोऽनुभवतः पुंसः जीवस्य प्रस्वापप्रतिबोधयोस्तत्तद्वस्तुपरिज्ञानलक्षणे जाग्रति यदन्वेति अनुगच्छति, स्वयमपि प्रतिबुद्धः, सुप्तावस्वपनात्[4] तत्तद्वस्त्वपरिज्ञानलक्षणसुप्तौ यद् व्यतिरिच्येत । व्यतिरिक्तं स्यात् । सर्वज्ञानसंभवात्[5] । 'प्रस्वापः स्वपनं स्वप्नः' इत्यभिधानात् । अन्यथाज्ञानलक्षणे प्रस्वापपदोक्ते

---

[1] जाग्रदाद्यवस्थानां भगवदिच्छाधीनत्वं संप्रतिपन्नदृष्टान्तेनाह—यथेति द्वाभ्याम् । यथा सुषुप्तो निद्रितः पुरुषो जीवः स्वप्ने स्वप्नावस्थायामात्मनि मनसि विद्यमानं विश्वं वासनामयप्रपञ्चं पश्यति । स्वप्नादुत्थितश्चैकदेशस्थं शयनदेशस्थं स्वात्मानमेव पश्यति न तु स्वप्नप्रपञ्चम् । तेन च स्वप्नं मायामात्रं मन्यत इति प्राक्तनम् । दार्ष्टान्तिकानुसारात् । एवमेव जागरणादीनि जाग्रत्सुषुप्तिमूर्च्छादीनि जीवानां स्थानान्यवस्थाः आत्मनः परमात्मनो माययेच्छया निमित्तभूतया तन्नियतयोपादानभूतया प्रकृत्या च मात्राणि निर्मितानि । मा निर्माण इति धातोः । एवं विज्ञाय तेषां जीवस्थानानां द्रष्टारं दर्शयितारं, स्वातन्त्र्येण जीव वस्थासाक्षिणं वा विश्वादित्रितयरूपात् परं विलक्षणं मोक्षप्रदं तुर्यरूपं भगवन्तं स्मरेदुपासीतेत्यर्थः—चेट्टी [2] इति सूत्रादित्यर्थः । 'इत्यतः' इति व पुस्तके नास्ति । [3] भगवदिच्छालक्षणया प्रकृत्याख्यया च मायया निर्मितानीत्यर्थः ।
[4] प्रतिबोधेऽन्वेति स्वयमपि प्रतिबुद्धः । सुप्तावस्वपन् व्यतिरिच्येत—ह [5] परमात्मनः कदाप्यज्ञानाभावादित्यर्थः

यद्येष विस्मृतः पुंसो मद्भावो भिन्न आत्मनः ।
ततः संसार एकस्य देहाद् देहो मृतेर्मृतिः ॥ ५७ ॥
लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसंभवाम् ।
आत्मानं यो न बुध्येत न क्वचित् क्षेममाप्नुयात् ॥ ५८ ॥
स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् ।
नोभयं चाप्यनीहायां पश्यंस्तद् विरमेत् कविः ॥ ५९ ॥

---

स्वप्नेऽपि यद् व्यतिरिक्तं वर्तते तत् परम् । 'ब्रह्मविदाप्नोति परम्' इति श्रुतेः । ततत्वात् तत् । ज्ञानस्वरूपत्वाज्ज्ञानम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । अनेन सुप्त्यवस्थानुभवी जीवः अननुभूय साक्षित्वेन[1] तिष्ठन् परमात्मा ततो भिन्न इति ज्ञातव्यम् । यद्वा जीवस्य अज्ञानसंभवादस्य तदभावाज्जीवस्याल्पगुणवत्त्वादस्यानन्तगुणत्वादस्यापरिच्छिन्नत्वात् जीवस्यपरिच्छिन्नत्वात् तदेव ज्ञानं तदेव ब्रह्म तदेव परम् । 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति श्रुतेः ॥ ५६ ॥

विपक्षे बाधकमुपपादयति—यदीति । यदि पुस आत्मनो जीवाद् भिन्न एष मद्भाव उक्तो मम स्थितिप्रकारो विस्मृतस्तर्हि ततस्तयोः[2] सयुजोः सख्योः जीवात्मपरमात्मनोः एकस्य सर्वभिन्नपरमात्मानं विस्मरतो जीवस्य संसारः स्यात् । किंलक्षणक इति तत्राह—देहादिति । देहयोगवियोगलक्षणो देहाद् देहः । तदुक्तम्—'सर्वभिन्नं परात्मानं विस्मरन् संसरेदिह' इति । सर्वभिन्नमिति विशेषणं विस्मरतस्तस्य जीवस्य मृतेर्मृतिः नित्यदुःखात्मकं तम एव प्राप्यते । एतदप्युक्तम्—'अभिन्नं संस्मरन् याति तमो नास्त्यत्र संशयः' इति ॥ ५७ ॥

मद्भावः मदैक्यलक्षणः स्वस्मादभिन्नः इत्यर्थाङ्गीकार उत्तरश्लोकेन विरुध्यत इत्याह—लब्ध्वेति । ज्ञानविज्ञानयोः संभवो यस्याः सा तथा ताम् । इह जम्बूद्वीपे तत्रापि भरतखण्डे त्रिवर्णलक्षणां मानुषीम् । आत्मानं जीवात्मानं परमात्मानं च । निर्विशेषवादिना ज्ञाने सामान्यविशेषानाङ्गीकाराद् व्यावहारिकस्याप्रामाणिकत्वाच्चेति[3] ज्ञानं शास्त्रार्थविषयं, विज्ञानं अनुभवजमित्ययं भेदोऽपि गतार्थ[4] इति ॥ ५८ ॥

ननु ज्ञानेन मोक्षो मा भूद् यज्ञेन स्यादिति तत्राह—स्मृत्वेति । ईहायां यज्ञादिकर्मकरणे परितः क्लेशं स्मृत्वा, ततः कर्मणः फलविपर्ययं निरतिशयसुखाप्राप्तिं दुःखापरिहारं च पश्यन्, अनीहायां

---

[1] साहित्येन—प्र [2] तत इत्यस्यार्थकथनं तयोरिति । [3] इतिशब्दोऽधिक इति भाति ।
[4] भेदोऽपि गतार्थ इत्यस्य भेदो न युज्यत इत्यर्थः ।

सुखाय दुःखमोक्षाय कुर्वाते दम्पती क्रियाः ।
ततोऽनिवृत्तिरप्राप्तिर्दुखस्य च सुखस्य च ॥ ६० ॥

एवं विपर्ययं बुध्वा नृणां विद्याभिमानिनाम् ।
आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥ ६१ ॥

दृष्टश्रुताभिर्मात्राभिः विमुक्तः स्वेन तेजसा ।
ज्ञानविज्ञानसन्तृप्तो मद्भक्तः पुरुषो भवेत् ॥ ६२ ॥

एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः ।
स्वार्थः सर्वात्मना ज्ञेयो यत् परात्मैकदर्शनम् ॥ ६३ ॥

त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम ।
ज्ञानविज्ञानसंपन्नो धारयन्नाशु सिध्यसि ॥ ६४ ॥

---

सर्वकर्माणि हरौ संन्यस्य ज्ञानमार्गप्रवृत्तौ, पश्यन् निरतिशयसुखप्राप्तिं दुःखपरिहारं तयोरमिश्रत्वं वा ज्ञात्वा, तन्निर्विध तत् तादृशं कर्म विरमेन्न कुर्यादित्यर्थः ॥ ५९ ॥

अग्निहोत्रादिक्रियाकरणयोग्यौ दम्पती । ततः क्रियातः दुःखस्य अनिवृत्तिः सुखस्य चाप्राप्तिः ॥ ६० ॥

कर्मविषयविद्याभ्यासे इयं विद्येत्यभिमानिनाम् । आत्मनो जीवस्य परमात्मनश्च वैकुण्ठादि-स्थानत्रयाव्याप्तिभूताप्रतिमभूतिमत्त्वया[1] विलक्षणाम् । जाग्रदादिस्थानत्रयातीतां वा ॥ ६१ ॥

मात्राभिः शब्दादिभिः । स्वेन तेजसा विशुद्धबुद्धिसामर्थ्यातिशयेनैव ज्ञात्वा पुरुषो भवेत्, मुक्त इति शेषः ॥ ६२ ॥

उक्तज्ञानम् अन्ययोगाद्[2] व्यवच्छिनत्ति—एतावानेवेति । किं तदित्यत उक्तम्—यदिति । परात्मन एकत्वस्य साम्याधिक्यराहित्यस्य दर्शनम् ॥ ६३ ॥

तव योग्यं चैतदेव नान्यदित्याह—त्वमेतदिति ॥ ६४ ॥

---

[1] वैकुण्ठादिस्थानत्रयेऽप्रतिमभूतिमत्तयेति सुबोधम् । मध्यस्थस्य अव्याप्तिभूतेत्यस्यार्थो मृग्यः ।
[2] अयोगादिति स्याद्वा ?

श्रीशुक उवाच —

आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः ।
पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ॥ ६५ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे षोडशोऽध्यायः ।

॥ अथ सप्तदशोऽध्यायः ॥

श्री शुक उवाच —

यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः ।
विद्याधरश्चित्रकेतुश्चचार गगने चरः ॥ १ ॥

सलक्षं लक्षवर्षाणामव्याहतबलेन्द्रियः ।
स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥ २ ॥

कुलाचलेन्द्रद्रोणीषु नानासङ्कल्पसिद्धिषु ।
रेमे विद्याधरस्त्रीभिर्गाययन् हरिमीश्वरम् ॥ ३ ॥

एकदा स विमानेन विष्णुदत्तेन भास्वता ।
गिरिशं ददृशे गच्छन् परीतं सिद्धचारणैः ॥ ४ ॥

---

चिरस्थितत्वे पुनरपि प्रश्नः स्यादित्येतस्य हरेरन्तर्धानमाह[1]—आश्वास्येति ॥ ६५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे षोडशोऽध्यायः ।

॥ अथ सप्तदशोऽध्यायः ॥

यथाशास्त्रतत्त्वेन ज्ञातः श्रीनारायणो मुक्तिं ददाति नान्यथा । यथाशास्त्रार्थतत्त्वं योग्यानमेव ज्ञातुं सुशकं नायोग्यानाम् । 'परोक्षप्रिया इव हि देवाः' इति श्रुतेः । दुरवगाहं[2] शास्त्रार्थतत्वम् , हरेः प्रीतिजनकं तथा प्रतिपादनमित्ययं प्रकारः कथ्यतेऽस्मिन् अध्याये । तत्र चित्रकेतो रुद्राणीशापप्राप्तिप्रकारं वक्तुं तावदाह—यतश्चेति । कुलाचलेन्द्रस्य द्रोणीषु निम्नतटीष्वत एव स्त्रीणां पुरुषाणां च नानासङ्कल्पसिद्धिषु ॥ ३ ॥

ततश्च किं प्रकृते ? तत्राह—एकदेति । दृष्ट्वाऽपि किमभूत् अत्राह—उवाचेति ॥ ५ ॥

---

[1] एवमुपदिश्य भगवानन्तर्दधौ इत्याह मुनिः आश्वास्येति—वीरराघवः । [2] दुरवग्रहम् इति पाठान्तरम् ।

आलिङ्ग्याङ्कृतां[1] देवीं बाहुना मुनिसंसदि ।
उवाच देव्या शृण्वन्त्या जहासोच्चैस्तदन्तिके ॥ ५ ॥

चित्रकेतुरुवाच —

एष लोकगुरुः साक्षाद् [2]धर्मवक्ता शरीरिणाम् ।
आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥ ६ ॥

जटाधरस्तीव्रतपा ब्रह्मवादी सतां पतिः ।
अङ्कृत्य[3] स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥

प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति ।
अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥

भगवानपि तच्छ्रुत्वा प्रहस्यागधधीर्नृप ।
तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः ॥ ९ ॥

इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् ।
रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥

पार्वत्युवाच —

अयं किमधुना लोके शास्ता दण्डधरः प्रभुः ।
अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत्[4] ॥ ११ ॥

---

इदं हीश्वरस्येश्वरत्वं यदन्यैः[5] असत्कारैर्निर्विकारत्वमित्याशयेन गिरिशस्य क्षमाप्रकारं वक्ति — भगवानपीति । अगाधधीरन्यैरज्ञातेयत्ताबुद्धिः ॥ ९ ॥

स्त्रीनिमित्तासत्कारपरिहारः स्त्रियैव कार्य इति परमेश्वराभिसान्धि जानती पार्वती प्रतिवक्ति — इतीति । धृष्टाय प्रगल्भाय, निर्जितः आत्माभिमानः आत्मदर्पो येन स तथा, आत्मविज्ञानं वा येन स तथा, तस्मै[6] 'अभिमानस्तु विज्ञाने प्रणये दर्पहिंसयोः' इति यादवः ॥ १० ॥

---

[1] आलिङ्ग्याङ्कीकृताम्—स । तथा हि तद्व्याख्यानम्—'अङ्कीकृतामिति पाठो निरस्तः' । [2] धर्मं वक्ता—ज

[3] कृत्वा—छ,ज [4] निर्लज्जानां निषेधकृत्—ज । निषेधकृत् निवारको जातः—चेट्टी । विप्रकृत् विरोधकृत्—स

निर्जितः अपराभावितश्चासावात्मनः स्वस्याभिमानो गर्वश्च सोऽस्यास्तीति स तथा—स

[5] अन्यकृतैरिति यावत् । [6] निर्जितात्माभिमानिने जितेन्द्रियोऽहमित्यभिमानवते—चेट्टी

न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा भृगुनारदाद्याः ।
न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम् ॥ १२ ॥

एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम् ।
यः क्षत्रबन्धुः परिभूय सूरीन् प्रशास्ति धृष्टस्तदयं हि दण्ड्यः ॥ १३ ॥

नायमर्हति वैकुण्ठपादमूलोपसर्पणम् ।
संभावितात्मा निस्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥

अतः पापीयसीं योनिमासुरीं याहि दुर्मते ।
यथेह भूयो महतां न कर्ताऽमुत्र किल्बिषम् ॥ १५ ॥

श्रीशुक उवाच —
एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः ।
प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥ १६ ॥

---

अयं शापयोग्यापराध इति ज्ञापयितुमित्यभिप्रेत्याह—न वेदेति । अतिवर्तिनं[1] असम्प्रज्ञात-समाधि(स्थ)त्वेन वर्तमानम् ॥ १२ ॥

अनिषेधे कारणमाह-एषामिति । एषां ब्रह्मादीनां पक्षे स्वावराणामिन्द्रादीनामनुध्येयं पदाब्ज-युग्मम् । कृद्योगे षष्ठीयम् । नित्यसंबन्धद्योतनाय वा । (अत्र) तदवराणामित्याचार्यैर्व्याख्यातम् । इदं किमवलम्ब्योच्यत इति चेन्न । 'विष्णुर्ब्रह्मप्राणवीन्द्रास्तद्दारानप्यृते हरः । ध्येयो हरेः पार्षदाद्यैः[2] ध्यायन् हरिचतुर्मुखौ । प्राणमेषां तथा दारान् न स्वतन्त्रतया क्वचित्' इति वचनबलाश्रयणात् । न तु ब्रह्मादीनामनुध्येयपदाब्जयुग्ममिति, बहुप्रमाणविरोधात् । अत एवाप्ताभिश्शास्त्रार्थोऽसौ परोक्षत्वेन देवप्रियत्वाद् दुरवगाह इत्यभिहितम् । यस्मादयमपराधी तत् तस्माद् दण्ड्यः ॥ १३ ॥

किं दण्डमर्हतीति तत्राह—नायमिति । अनर्हत्वे कारणमाह—संभावितात्मेति ॥ १४ ॥

तदर्थं क उपाय इति तत्राह—अत इति ॥ १५ ॥

शप्तस्य सद्भक्तस्य तदुपसत्तिप्रकारमाह—एवमिति ॥ १६ ॥

---

[1] अतिवर्तिनं शास्त्रमतिक्रम्य वर्तमानशीलम्—चेट्टी [2] पार्षदः—ह

चित्रकेतुरुवाच —

प्रतिगृह्णामि ते शापमात्मनोऽञ्जलिनाऽम्बिके ।
देवैर्मर्त्याय यत् प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥

संसारचक्र एतस्मिन् जन्तुरज्ञानमोहितः ।
भ्राम्यन् सुखं च दुःखं च भुङ्क्ते सर्वत्र सर्वदा ॥ १८ ॥

नैवात्मा न परश्चापि कर्ता स्यात् सुखदुःखयोः ।
कर्तारं मन्यतेऽत्राज्ञ[1] आत्मानं परमेव च ॥ १९ ॥

गुणप्रवाह एतस्मिन् कः शापः को न्वनुग्रहः ।
कः स्वर्गो नरकः को वा किं दुःखं सुखमेव च ॥ २० ॥

---

इहामुत्र स्थितानां[2] पूर्वदिष्टं पूर्वजन्मनि यत् पुण्यपापलक्षणं कर्म देवैर्मनुष्याय प्रोक्तं विहितम्, तस्य मर्त्यस्य तत् कर्म ह्येवं सुखदुःखयोः कारणमिति शेषः[3] ॥ १७ ॥

तदेव विशिनष्टि—संसार इति । सर्वत्र जन्मसु ॥ १८ ॥

ननु सुखदुःखोत्पत्तौ किं भोक्ता कारणमुतेतर इत्याशङ्क्य यद् भगवता क्लृप्तं तदेव नियतं कर्म कारणं ज्ञानी मन्यते । तत्राज्ञानी स्वमन्यं वा (कारणं) मन्यत इत्याह—नैवेति । आत्मा स्वयं परः स्वस्मादितरः । अं हरिं जानातीति अज्ञः श्रीहरितत्त्वज्ञः परमात्मानमेव मन्यत इति च योजनाऽवगन्तव्या । 'यत्तद् भगवता क्लृप्तं तदेव नियतं भवेत्' इति वचनात्[4] ॥ १९ ॥

यत एवं श्रीहरिणा क्लृप्तमायातीत्यतः शापादिप्राप्तौ दुःखादिकं न कार्यमित्याह — गुणेति । गुणप्रवाहे संसारे शापादेः श्रीहरीच्छाधीनप्राचीनसुकृतदुष्कृतयोः कारणत्वात् स्वर्गस्य चानित्याल्पसुखत्वान्नरकस्य किञ्चिद् भुक्त्वा क्षपणसंभवात् सुखादेश्चाल्पत्वादनित्यत्वाच्च । तदुक्तम् 'अतोऽन्येषां वरः शापो गुणदोषः प्रकर्तृता । स्वतः प्राप्ता[5] भेदकृतिर्वासनारूपिणो यथा । विद्यमानस्य मनसि पुनः स्वप्नेऽपि दर्शनम् । भगवद्वशता यस्मात् सर्वेषां ज्ञेयमेव तत्' इति । स्वतः स्वतन्त्राद्धरेः प्राप्ता कर्मणो

---

[1] अप्राज्ञः—चेट्टी । अत्राज्ञः एतद्विषयज्ञानहीनः—म

[2] इहामुत्र स्थितानाम्—एतावत् ब-पुस्तके नास्ति ।

[3] (देवैः) यद् वरशापादिकं प्रोक्तं भवति तत् तस्य मर्त्यस्य पूर्वदिष्टं हि प्राचीनकर्मोद्बोधकेन श्रीहरिणा क्लृप्तमेव —चेट्टी । अनेन न तदपायोपायो विनाऽनुभवेनेत्यभिप्रेति—स

[4] एतद्वचनमेतदध्यायस्थ २९ श्लोके सङ्गतमिति —स

[5] प्राप्तात्—ह

एकः सृजति भूतानि भगवानात्ममायया ।
एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः ॥ २१ ॥

न चास्य कश्चिद् दयितः प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः ।
समस्य सर्वत्र निरञ्जनस्य कुतोऽनुरागः कुत एव[1] रोषः ॥ २२ ॥

तथाऽपि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ।
बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतये च कल्पते ॥

अथ प्रसादये न त्वां शापमोक्षाय भामिनि ।
यन्मन्यसे असाधूक्तं मम तत् क्षम्यतां सति ॥ २४ ॥

बादरायणिरुवाच —

इति प्रसाद्य गिरिशौ चित्रकेतुररिन्दम ।
जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥ २५ ॥

द्रा

ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् ।
देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥ २६ ॥

---

मेवकृतिः, दृश्यते इति शेषः[2] । अनेनैतदुक्तं भवति—मनसि विद्यमानस्य वासनारूपिणः वस्तुनः स्वप्ने यथा दर्शनं तथा [3]परादनित्यसुखादिदर्शनं स्यात् । न चैतत्सर्वं स्वाधीनम्, किन्तु हरीच्छाधीनमिति[4] ॥२०॥

ननु हरीच्छादिनियतत्वं शापादेः कस्मात् कल्प्यत इति तत्राह—एक इति । कर्मादिसत्ताऽपि ईशेच्छाधीनेति सूचनाय—एक इति । आत्ममाययेत्यनेनानन्यनियत इति सूचितम् ॥ २१ ॥

हरेः समत्वं च स्वभक्तसेवानतिरेकेण फलदातृत्वं शत्रोरप्यपराधानतिरेकेण दण्डकरणत्वम् । 'सेवायोग्यातिरेकेण स्वानामपि न दास्यति । अपराधातिरेकेण नान्यस्यातः समो हरिः' इति वचनात् ॥ २२ ॥

यद्यपि विशेषतोऽनुरागादिकं नास्ति । तथाऽपि तस्य हरेः शक्तेर्विसर्गो विशिष्टस्वभाव एषां जीवानां सुखाद्यर्थे कल्पत इत्यन्वयः । यद्यपि भगवानेव मुख्यकर्ता, तथाऽपि तेषां पूर्वकर्मणां शक्तीनां विविधसर्गः समूहः एषां शरीरिणामिति वा ॥ २३ ॥

अथ तस्मादीश्वराधीनत्वात् । तर्हि किमाकाङ्क्षसीति तत्राह—यदिति ॥ २४ ॥

---

[1] एम—छ [2] तात्पर्यवचनव्याख्येयम् । [3] वरादिनित्य .... घ,ज । वरादनित्य—क

[4] एतत् तात्पर्यवचनं एतदध्यायगत 'अविवेककृतः पुंसः' इति श्लोक (३०) संबद्धमिति—चोदी, स

देवदेव उवाच —

दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः ।
माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् ॥ २७ ॥
नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥
देहिनां देहसंयोगाद् द्वन्द्वानीश्वरलीलया[1] ।
सुखं दुःखं मृतिर्जन्म शापानुग्रह एव च ॥ २९ ॥
अविवेककृतः पुंसो ह्यर्थभेद इहात्मनि ।
गुणदोषविकल्पश्च भिदेव स्वप्नकल्पिता ॥ ३० ॥

---

हरेर्भृत्यभृत्यानां माहात्म्यं देहवियोगलक्षणावस्थाप्राप्तावप्यत्रासलक्षणम् ॥ २७ ॥

अस्यैव नैतादृशमाहात्म्यं किन्त्वन्येषामप्यस्तीत्यमिप्रेत्याह—**नारायणेति** । कुतो न बिभ्यतीति तत्राह—**स्वर्गेति** ॥ २८ ॥

द्वन्द्वानीत्युक्तविवरणं – **सुखमित्यादि** । ईश्वरलीलया देहसंयोगाद् द्वन्द्वानि, भवन्तीति शेषः ॥ २९ ॥

ननु देहसंबन्धाद् द्वन्द्वादीनि सन्तु, अस्य श्वशृगालाद्याकारेण भेदः किङ्कृत इति तत्राह—**अविवेककृत इति** । इहात्मनि जीवे श्वाऽयं, शृगालोऽयम् इत्याद्याकारनिमित्तव्यवहारभेदः पुंसोऽविवेकेन हरेः स्वस्य च स्वरूपविषयकज्ञानाभावेन कृतो यस्मात् तस्मादियमनर्थपरम्परा। किञ्चात्मन्ययं गुणोऽस्त्ययं दोषोऽस्तीति विकल्पश्चाविवेकेन कृतः । कथमिव ? स्वप्ने कल्पिता वासनोपादानकृता गजादिलक्षणा भिदेव । अनित्यत्वादेवैतत्साम्यम् । न तु मिथ्यात्वात् । अन्यथा अर्थक्रियायोग इति[2] ॥ ३० ॥

[1] ईश्वरमायया—ब

[2] अयं श्लोकद्वयार्थः (२९-३०)—देहिनां देहसंयोगान्निमित्ताद् यानि सुखदुःखादिद्वन्द्वानि भवन्ति, तत्र देहसंयोग एव न कारणम् । तस्यापीश्वराधीनत्वादित्याह—ईश्वरमायया । देहसंयोगोऽपीश्वरेच्छया भवति । ततो द्वन्द्वानि चेश्वरेच्छया भवन्ति । कानि द्वन्द्वानि ? सुखं दुःखमित्यादि । ननु जीव एवाप्रियं शपति प्रियमनुगृह्णाति, ततश्च सुखदुःखे भवतः, किमीश्वरेण ? आह—अविवेककृतः । वरशापादिरर्थभेदः यथा तथा गुणदोषविकल्पश्च । गुण इति सुखं, दोष इति दुःखम् । तयोर्विकल्पनम् , कॢप् सामर्थ्ये, कर्तृत्वमिति यावत् , आत्मनि जीवे यद् व्यवह्रियते सोऽविवेकमूलः । ईश्वरमायाऽपरिज्ञानमूलेव सा प्रतीतिः । स्वप्नकल्पिता भिदेव । ईश्वरसृष्टे स्वप्ने कल्पिता भेदबुद्धिरिव, अहमेव स्वाप्नार्थान् सृजामि पश्यामि

वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ।
ज्ञानविज्ञानवीर्याणां न हि कश्चिद् व्यपाश्रयः ॥ ३१ ॥

नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः ।
विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः ॥ ३२ ॥

न ह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ।
आत्मत्वात् सर्वभूतानां सर्वभूतप्रियो हरिः ॥ ३३ ॥

तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः ।
सर्वत्र समदृक् शान्तो ह्यहं चैवाच्युतप्रियः[1] ॥ ३४ ॥

तस्मान्न विस्मयः कार्यः पुरुषेषु महत्सु च ।
महापुरुषभक्तेषु शान्तेषु समदर्शिषु ॥ ३५ ॥

श्रीशुक उवाच —

इति श्रुत्वा भगवतः शिवस्योमाऽभिभाषितम् ।
बभूव शान्तधी राजन् देवी विगतविस्मया ॥ ३६ ॥

इति भागवतो देव्याः प्रतिशप्तुमलन्तमः[2] ।
मूर्ध्ना सङ्गृहे शापमेतावत् साधुलक्षणम् ॥ ३७ ॥

---

अन्यः कश्चिद् विशिष्टाश्रयो नास्ति । भक्तिज्ञाने एवेति[3] शेषः ॥ ३१ ॥

देववदज्ञानवदस्य ज्ञानं न सुसाधनमित्याह—नाहमिति । आत्मत्वात् स्वामित्वात् । न हि सर्वभूतस्वामिनः स्वपरभेदकल्पनायुक्ता । हेत्वन्तरमाह—सर्वभूतेति ॥ ३३ ॥

'अथ प्रसादये न त्वां शापमोक्षाय' इत्यस्यार्थश्चतुर्धा संभाव्यते शापोऽभिमत इति तन्मोक्षायाप्रसादनम्, अनिष्टोऽप्यतर्कितत्वेन प्राप्तोऽभिमत इति कृत्वा वा, तदभिभवशक्त इति कृत्वेति (वा), आहोस्वित् प्रतिशापदानसमर्थ इति कृत्वेति (वा) । कोऽयमर्थोऽनेनाङ्गीकृत इति तत्राह—प्रतिशप्तु-

---

चेति । आत्मनोऽवशत्वाद् यथा स्वप्नकल्पितभिगवज्जियता तद्दृष्टान्तेन जाग्रदादिकं सर्वं सर्वेषां भगवतैव कल्पितमिति । स्वप्ने कल्पिता या भिदा जाग्रत्वं स्वप्नानामर्थानां मात्यत्वं च तद्वदविवेककृत इति वा । वस्तुयाथात्म्याद्यन्यथात्वं हि भिदा इति—गोविन्दाचार्याः ।

[1] स्वयं एवकोपानुत्पादने कारणमीरयति अहं चेति—स । अच्युतः प्रियो यस्य, अच्युतप्रियश्च । तस्मादकिञ्चन कोपो माभूदिति भावः—पंक्ती [2] अतिशयेन अलं शक्तोऽलन्तम इति विग्रहः । क्षम इति पाठेऽलन्तं समर्थ इत्यर्थः—स [3] विनेति पेशलम् । भक्तिज्ञाने एवाश्रयावेति वा ।

जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ।
वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥

एतत् ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः ॥ ३९ ॥

इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः ।
माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद् विमुच्यते ॥ ४० ॥

य एतत् प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् ।
इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥ ४१ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे सप्तदशोऽध्यायः ।

---

मिति । मूर्ध्ना संजगृह इत्यनेन द्वितीयोऽभिमत इति ज्ञायते । प्रश्रयस्य साधुलक्षणत्वात् । अस्य च साधुष्वेकत्वाच्चतुर्थपक्षस्योर्वैरितत्वेनाङ्गीकारो न भवति । 'देवा एव तदन्येभ्यः शक्ता नास्त्यत्र संशयः' इति वचनात् । अत्र यः कश्चिद् विशेषोऽस्तीति मतम् । 'अशक्ता अपि शक्तानां शक्ताः शापादिषु स्फुटम् । तथाप्यशक्तैर्विहिताः शापाद्याः शक्तिमत्सु च । अत्यल्पा अल्पकालाश्च न सम्यक् प्रभवन्ति च । यत्नेनापोहितुं शक्या उत्तमैस्तु न संशयः । उत्तमेषु कृताः शापाः कर्तॄणां ज्ञानपुण्ययोः । निश्शेषेण निहन्तारः' इत्यादि ॥ ३७ ॥

कुत्रास्य जन्माभूत् ? अत्राह—जज्ञ इति ॥ ३८ ॥

परमप्रमेयमुपसंहरति—एतदिति । वृत्रस्य यच्चरितं मां परिपृच्छसि । किञ्च सर्वं एतत्सर्वम् । किञ्च तस्यासुरजातेरसुरवंशे जननस्य यत् कारणं च एतच्च कथितमिति शेषः ॥ ३९ ॥

फलमाह—इतिहासमिति ॥ ४० ॥

शृङ्खलादिबन्धमोक्षोऽपि बन्धमोक्षः स्यात्, न तु संसारबन्धमोक्षेण वैकुण्ठलोकप्राप्तिरस्मादवगतेति शङ्कित्वा कालविशेष इतिकर्तव्येन सा स्यादित्याह—य एतदिति ॥ ४१ ॥

इति श्रीमद्भागवतटीकायां श्रीविजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे सप्तदशोऽध्यायः ।

॥ अथ अष्टादशोऽध्यायः ॥

पृश्निस्तु[1] पत्नी सवितुः सावित्रीं व्याहृतीं त्रयीम् ।
अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् ॥ १ ॥
सिद्धिर्भगस्य भार्याऽङ्ग महिमानं विभुं प्रभुम् ।
आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥ २ ॥
धातुः कुहूः सिनीवाली राका चानुमतिस्तथा ।
सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३ ॥
अग्नीन् पुरीषानाधत्त क्रियायां समनन्तरः ।
चर्षणी वरुणस्यासीद् यस्यां जातो भृगुः पुनः ॥ ४ ॥
वाल्मीकिश्च महायोगी वल्मीकादभवत् किल ।
अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी ॥ ५ ॥
रेतः सिषिचतुः कुम्भे उर्वश्या सन्निधौ द्रुतम् ।
रेवत्यां[2] मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

अस्मिन्नध्याये पूर्वोक्तं सृष्टिशेषं निरूपयति—पृश्निरिति । तुशब्दात् पूर्वस्मात् फलविशेषमाह । सावित्री गायत्र्यभिमानिनीत्युक्तम् । प्रागप्येवमनुसन्धेयम् ॥ १ ॥

'चन्द्रे दृष्टे सिनीवाली चन्द्रे नष्टकले कुहूः' । धातुः[3] क्रियानामभार्याः याः कुहूसिनीवाल्याद्याः ता आधत्त ॥ ३ ॥

समनन्तरो विधाता च क्रियायां भार्यायां पुरीषाख्यानग्नीनाधत्त । वरुणनाम्नः सूर्यस्य वारुणीनाम भार्या । पूर्वं ब्रह्मणो जातत्वात् पुनरित्युक्तम् ॥ ४ ॥

वाल्मीकिश्च वरुणवीर्याद् वल्मीकादभूत् । ब्रह्मजो वसिष्ठश्च पुलस्त्यजोऽगस्त्यश्च द्वौ ऋषी पुनर्मित्रावरुणयोर्जातौ ॥ ५ ॥

तयोर्जनिप्रकारमाह—रेत इति । उर्वश्या दर्शनात् तत्सन्निधौ द्रुतं स्कन्नं रेतस्तदनन्तरं मित्रावरुणौ कुम्भे सिषिचतुः । तस्मादुभावपि कुम्भसंभवाविति प्रसिद्धिः ॥ ६ ॥

---

[1] पृश्निश्च—क,ज [2] रेवत्याम्—स [3] धातुरित्यादिवाक्यं लिपिकृत्प्रमादपतितं भाति । क्रिया विधातुर्हि भार्या न धातुः । धातुः कुह्वादिभार्याः क्रमात् सायमादिपुत्रान् प्रासुवत इति वाक्यं स्यात् ।

पौलोम्यामिन्द्र आधत्त त्रीन् पुत्रानिति नः श्रुतम् ।
जयन्तं ऋषभं तात तृतीयं मीढुषं प्रभुः ॥ ७ ॥

उरुक्रमस्य देवस्य मायावामनरूपिणः ।
कीर्तौ पत्न्यां बृहच्छ्लोकास्तस्यासन् सौभगादयः ॥ ८ ॥

तत्कर्मगुणवीर्याणि कश्यपस्य महात्मनः ।
पश्चाद् वक्ष्यामहेऽदित्यां यथैवावततार ह ॥ ९ ॥

अथ कश्यपदायादान् दैतेयान् कीर्तयामि ते ।
यत्र भागवतः श्रीमान् प्रह्लादो बलिरेव च ॥ १० ॥

दितेर्द्वावेव दायादौ दैत्यदानववन्दितौ ।
हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥

हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ।
जम्भस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥ १२ ॥

संह्लादं प्रागनुह्लादं प्रह्लादं ह्लादमेव च ।
तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥ १३ ॥

शिरोऽहरद् यस्य हरिश्चक्रेण पिबतोऽमृतम् ।
संह्लादस्य कृतिर्भार्याऽसूत पञ्चजनं ततः ॥ १४ ॥

ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ।
योऽगस्त्यायाप्यतिथये[1] पेचे वातापिमिल्वलः ॥ १५ ॥

---

महात्मनः कश्यपस्य पत्न्यामदित्यां यथाऽसावुरुक्रमोऽवततार तत्कर्मादीनि पश्चादष्टमस्कन्धे-वक्ष्याम इत्यन्वयः ॥ ९ ॥

अथ मङ्गलमस्तु । ननु दैत्यवंशवर्णनं किमर्थं क्रियते ? तत्कथनस्य श्रेयःसाधनतानुपयोगित्वा-दिति तत्राह—यत्रेति । यत्र दितिसन्ताने । प्रह्लादबलिचरितकीर्तनश्रवणाभ्यां श्रेयःसाधनत्व[2]संभवा-दित्यर्थः ॥ १० ॥

विप्रचितः विप्रचितेः सकाशात् राहुं[3] सुतम् ॥ १३ ॥

---

[1] योऽगस्त्याय त्वतिथये-ज [2] 'साधन' इति स्यात् । [3] राहुमग्रहीद् गर्भे । तज्जातो राहुरिति भावःमस

अनुह्लादस्य सूर्म्यायां बाष्कलो महिषस्तथा ।
विरोचनस्तु प्राह्लादिर्बलिस्तस्याभवत् किल ॥ १६ ॥

बाणज्येष्ठं केतुशतमशनायां[1] ततोऽभवत् ।
तस्यानुभावः[2] सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥

बाणस्त्वाराध्य गिरिशं लेभे तद्गणमुख्यताम् ।
यत्पार्श्वे भगवानास्ते अद्यापि पुरपालकः ॥ १८ ॥

मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ।
त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम् ॥ १९ ॥

राजोवाच —

कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ।
इन्द्रेण प्रापिताः साम्यं किं नु साधु कृतं हि तैः ॥ २० ॥

इमे श्रद्दधते विद्वन् ऋषयो हि मया सह ।
परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि[3] ॥ २१ ॥

सूत उवाच —

तद् विष्णुरातस्य स बादरायणिर्वचो निशम्याह तमर्थवन्मुनिः ।
सभाजयंस्तन्निभृतेन चेतसा जगाद सत्रायणसर्वदर्शन[4] ॥ २२ ॥

---

तस्य विरोचनस्य ॥ १६ ॥

ततो बलेः । तस्यानुभावः पश्चादष्टमस्कन्धे । अनुभावमिति पाठेऽभिधास्यते वदिष्यति व्यास इति शेषः[5] । अयं जन इति वा ॥ १७ ॥ यस्य बाणस्य पार्श्वे[6] ॥ १८ ॥

सात्मतां समानजातितां सोदरत्वम् ॥ १९ ॥ साधु पुण्यम् ॥ २० ॥

तद् वचः । तन्निभृतेन तस्मिन् स्निग्धेन । सत्रायणः सत्रे प्रधानः सर्वदर्शनः सर्वज्ञः ॥ २२ ॥

---

[1] विन्ध्यावलिस्तदोपेत्य पत्नी जालकमालिनीत्यष्टमोक्तेस्तस्या एवाशनेति नामान्तरं ज्ञेयम्—स [2] तस्यानुभावम्—वि

[3] अर्हसि—स । अर्हति—ज,छ [4] सत्रायण सर्वदर्शनः—स । हे सत्रायण सत्रमयनमाश्रयो यस्य तत्संबुद्धिः, नारायणशब्दवण्णत्वम्, शौनक—स चेट्टी च ।

[5] अनुभावमिति पाठे सुश्लोक्यमित्येव मूलं स्यात् । तदात्वे व्यास इति शेषः इति वाक्यम्, अयं जन इति वा इति वाक्यं चोपपद्येते ।

[6] भगवान् पुरहरः पुरपालकः सन् यस्य बाणस्य पार्श्वे समीपे आस्ते करुणापरवशः—स

श्रीशुक उवाच —

हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ।
मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥ २३ ॥

कदा नु भ्रातृहन्तारं इन्द्रियाराममुल्बणम् ।
अक्लिन्नहृदयं पापं घातयित्वा स्वपे सुखम् ॥ २४ ॥

कृमिविड्भस्मसंज्ञाऽन्ते यस्येशाभिहितस्य वा ।
भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ २५ ॥

आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ।
मदशोषणमिन्द्रस्य भूयाद् येन सुतो हि मे ॥ २६ ॥

इति भावेन सा भर्तुराचचारासकृत् प्रियम् ।
शुश्रूषयाऽनुरागेण प्रश्रयेण दमेन च ॥ २७ ॥

भक्त्या परमया राजन् मनोज्ञैर्वल्गुभाषितैः ।
मनो जग्राह भावज्ञा सुस्मितापाङ्गवीक्षितैः ॥ २८ ॥

---

पक्षपाततया कर्मकरः पार्ष्णिग्राहः तेन । शोकसन्दीप्तेन ॥ २३ ॥

अक्लिन्नहृदयम् अनार्द्रहृदयम् । स्वपे निद्रां कुर्याम् ॥ २४ ॥

वाशब्दोऽपिशब्दार्थः । ईशाभिहितस्य ईशोऽहं राजाऽहम् इत्यादिशब्दवाच्यस्याऽपि यस्य देहान्ते[1] मरणोत्तरकाले क्रिमिविड्भस्मसंज्ञा भवेत् । चिरकालावस्थाने कृमिरिति संज्ञा श्वादिभिर्भक्षिते विट्संज्ञा । वह्निदाहे भस्मसंज्ञा । तत्कृते तस्य देहस्यार्थे भूतध्रुक् सर्वप्राणिहिंसकः स्वार्थं स्वप्रयोजनं किं वेद ? न किमपि वेदेत्यन्वयः । यः स्वार्थं कुरुते स वेद किम् ? ज्ञानवान् किम् ? न भवतीत्यर्थ इति वा । कुत इति तत्राह—निरय इति । निर्गतं अयम् इष्टप्रदं दैवं यस्मात् स तथा तादृशो भवतीति यतस्तस्मात् । यतः स्वरूपाज्ञानाद्वा, भूतद्रोहाद्वा ॥ २५ ॥

इदं जगद् ध्रुवम् इत्याशासानस्य वाञ्छतः उद्धतबुद्धेरिन्द्रस्य मदशोषणं येन सुतेन स्यात् स सुतो मे स्यात् ॥ २६ ॥

इति भावेन अभिप्रायेण ॥ २७ ॥

---

[1] देहस्यान्ते—छ

एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ।
बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥ २९ ॥

विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः ।
स्त्रियं चक्रे स्वदेहार्धां[1] यया सां मतिर्हृता ॥ ३० ॥ पुंसां

एवं शुश्रूषितस्तात भगवान् कश्यपः स्त्रिया ।
प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥ ३१ ॥

कश्यप उवाच —

वरं वरय वामोरु प्रीतस्तेऽहमनिन्दिते ।
स्त्रीणां भर्त्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥

पतिरेव हि नारीणां दैवतं परमं स्मृतम् ।
मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ ३३ ॥

स एव देवतालिङ्गैर्नामरूपविकल्पितैः ।
इज्यते भगवान् पुंभिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥

---

जगदादौ प्रजापतिर्ब्रह्मा भूतान्येकान्तभूतानि परस्परस्नेहरहितानि केवलं मृत्युभूतानि[2] विलोक्य मिथः स्नेहबन्धार्थं स्वशरीरार्धां स्त्रियं चक्रे ससर्जेत्यन्वयः ॥ ३० ॥

भर्त्तरि स्त्रीणामर्थे सुप्रीते सति किं कामः[3] पुरुषार्थः अगमः प्राप्तुमशक्य इत्यन्वयः ॥ ३२ ॥

ननु 'तदेतत् प्रेयः' इति श्रुतेरविगानेन सर्वजनस्य परमेष्टदेवता श्रीधर इति यतः, (अतः) कथं पतिरेव नारीणामिष्टदेवतेति विशिष्योच्यत इति तत्राह—मानस इति । वासुदेवः सर्वभूतानां मानसः मनसि स्थितः पूज्यः । को वासुदेव इति तत्राह—श्रिय इति ॥ ३३ ॥

एतदेव विशदयति—स इति । वासुदेव एव नामरूपाभ्यां विविधत्वेन कल्पितैर्लिङ्गैः देवताविग्रहैः विशेषतः सन्निहितत्वेन स्त्रीभिः पुंभिश्च इज्यते । तत्र स्त्रीभिः पतिसन्निहितत्वेन पूज्यते, तदर्थम्—पतिरूपधृगिति । पुरुषैश्च देवतालिङ्गनामरूपत्वेनेति । लिङ्गं लक्षणं विग्रहश्चोच्यते ॥ ३४ ॥

---

[1] स्वदेहार्धम्—स [2] केवलं मृत्युभूतानीत्यस्यान्वयो न ज्ञायते । [3] कः काम इति स्यात् ।

तस्मात् पतिव्रता नार्यः श्रेयःकामाः सुमध्यमाः ।
यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥ ३५ ॥

योऽहं त्वयाऽर्चितो भद्रे ईदृग्भावेन भक्तितः ।
किं ते सम्पादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥

दितिरुवाच —

वरदोऽसि यदि ब्रह्मन् पुत्रमिन्द्रहणं वृणे ।
अमृत्युं मृतपुत्राऽहं येन मे घातितौ सुतौ ॥ ३७ ॥

निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत ।
अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥ ३८ ॥

अहो अद्येन्द्रियारामो योषिन्मय्येशमायया ।
गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥

कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः ।
धिङ्मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः ॥ ४० ॥

शरच्चन्द्रोपमं वक्त्रं वचश्च श्रवणामृतम् ।
हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥

न हि कश्चित् प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति हि ॥ ४२ ॥

प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ।
वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पये ॥ ४३ ॥

---

यस्मात् पत्यावाहित ईशः तस्मात् पतिपूजनेन भगवानेव पूजितः स्यादित्युपसंहरति — तस्मादिति । पतिं पतिस्थम् ॥ ३५ ॥

ईदृग्भावेन पतिस्थितः परमात्मा मह्यं प्रसीदत्विति बुध्या ॥ ३६ ॥ अमृत्युं अनश्वरम् ॥ ३७ ॥

स्वभावं गुप्तचौर्यभावं अनुवर्तमानायाः अतिक्रमोऽन्यायः । स्वभावं सौशील्यमनुवर्तन्त्या इति वा[1] ॥ ४० ॥

स्वार्थे आशीष्षु आत्मा यासां तास्तथा । तासां स्वाशिषमिच्छन्तीनामित्यर्थः ॥ ४२ ॥

---

[1] स्वभावमनुवर्तमानायाः योषितः कोऽत्रातिक्रमः अपराधः ? न कोऽपीत्यर्थः — चेट्टी

इति संचिन्त्य भगवान् मारीचः कुरुनन्दन ।
उवाच किञ्चित् कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥

कश्यप उवाच —

पुत्रस्ते भविता भद्रे इन्द्रहा देवबान्धवः ।
संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥ ४५ ॥

दितिरुवाच —

धारयिष्ये व्रतं ब्रह्मन् ब्रूहि कार्याणि यानि मे ।
यानि चेह निषिद्धानि न व्रतं घ्नन्ति यान्युत ॥ ४६ ॥

कश्यप उवाच —

न हिंस्यात् सर्वभूतानि न शपेन्नानृतं वदेत् ।
न छिन्द्यान्नखरोमाणि न स्पृशेद् यदमङ्गलम् ॥ ४७ ॥
नाप्सु[1] स्नायान्न कुप्येत न संभाषेत दुर्जनैः ।
न वसीताधौतवासः स्रजं वा विधृतां क्वचित् ॥ ४८ ॥
नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम् ।
भुञ्जीतोदक्यया दृष्टं पिबेन्नाञ्जलिना त्वपः ॥ ४९ ॥
नोच्छिष्टाऽस्पृष्टसलिला सन्ध्यायोर्मुक्तमूर्धजा ।
अनर्चिताऽसंयतवाक् नासंवीता बहिश्चरेत् ॥ ५० ॥
नाधौतपादा प्रयता नार्द्रपान्नाप्युदक्शिराः ।
शयीत नापराक् नान्यैर्न नग्ना न च सन्ध्ययोः ॥ ५१ ॥

---

देवानां बन्धुभूतः ॥ ४५ ॥

अधौतवासः अनिर्णिक्तवस्त्रं न वसीत नाच्छादयेत् । विधृताम् अन्योपभुक्ताम् ॥ ४८ ॥

चण्डिकान्नं सप्तमातृभ्योऽर्पितमन्नम् । (उच्छिष्टम्)[2] पिपीलिकामक्षिकाभोज्यम् । उदक्यया रजस्वलया ॥ ४९ ॥

अनर्चिता अलङ्काररहिता । असंवीता प्रावरणादिरहिता ॥ ५० ॥

अपराक् पश्चिमशिरा न शयीत ॥ ५१ ॥

---

[1] अप्सु प्रविश्य न स्नायात्—चेट्टी । अप्सु अनुद्धृतासु—स [2] उच्छिष्टं पतिव्यतिरिक्तोच्छिष्टम्—स

धौतवासा शुचिर्नित्यं सर्वमङ्गलसंयुता ।
पूजयेत् प्रातराशात् प्राग् गोविप्रान् श्रियमच्युतम् ॥ ५२ ॥

स्त्रियो वरवतीश्चार्चेत् स्रग्गन्धबलिमण्डनैः ।
पतिं चार्च्योपतिष्ठेत ध्यायेत् कोष्ठगतं च तम् ॥ ५३ ॥

संवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ।
धारयिष्यसि चेत् तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥

**श्रीशुक उवाच —**

बाढमित्यभ्युपेत्याथ दिती राजन् महामनाः ।
कश्यपात् गर्भमाधत्त व्रतं चाञ्जो दधार सा ॥ ५५ ॥

मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ।
शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत् कविः ॥ ५६ ॥

नित्यं वनात् सुमनसः फलमूलसमित्कुशान् ।
पत्राङ्कुरमृदापश्च काले काल उपाहरत् ॥ ५७ ॥

एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ।
प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥

नाध्यगच्छद् व्रतच्छिद्रं तत्परोऽथ महीपते ।
चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥ ५९ ॥

एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता ।
अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥

---

प्रातराशात् प्रातःकालभोजनात् पूर्वम् ॥ ५२ ॥

वरवतीः भर्तृसहिताः । पतिमभ्यर्च्योपतिष्ठेत स्तुतिं कुर्यात् । पतिस्थितं परमात्मानं कोष्ठगतं हृदि गतं ध्यायेत् । स्वबाह्यान्तरगतं वा ॥ ५३ ॥

नाम्ना पुंसवनम् ॥ ५४ ॥

मातृष्वसुः मातुरदित्याः स्वसुर्दित्याः ॥ ५६ ॥

लब्ध्वा तदन्तरं शक्रो निद्रोपहृतचेतसः ।
दितेः प्रविष्ट उदरं योगेशो योगमायया ॥ ६१ ॥

र्त

चकर्त्त सप्तधा गर्भं वज्रेण कनकप्रभम् ।
रुदन्तं सप्तधैकैकं मा रोदीरिति तान् पुनः ॥ ६२ ॥

ते तमूचुः पाट्यमानाः सर्वे प्राञ्जलयो नृप ।
नो जिघांससि किं त्विन्द्र भ्रातरो मरुतस्तव ॥ ६३ ॥

मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः ।
अनन्यभावान् पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥

न ममार दितेर्गर्भः श्रीनिवासानुकम्पया ।
बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥

सकृदिष्ट्वाऽऽदिपुरुषं पुरुषो याति साम्यताम् ।
संवत्सरं किञ्चिदूनं दित्या यद्धरिरर्चितः ॥ ३६ ॥

सजूरिन्द्रेण पञ्चाशद् देवास्ते मरुतोऽभवन् ।
व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥ ६७ ॥

दितिरुत्थाय ददृशे कुमाराननलप्रभान् ।
इन्द्रेण सहितान् देवी पर्यतुष्यदनिन्दिता[1] ॥ ६८ ॥

---

योगमायया योगसामर्थ्येन ॥ ६१ ॥ जिघांससि हन्तुमिच्छसि ॥ ६३ ॥

मा भैष्ट भयं मा कुरुध्वम् । कौशिकः इन्द्रः, मरुतां गणानाह ॥ ६४ ॥

साम्यतां समानरूपताम् । हरिः श्रीनारायणो दित्या किञ्चिदूनं संवत्सरमर्चितो यदतः साम्यतां यातीति किमु । कुतः ? पुरुषः सकृत् संपूज्य साम्यतां याति तस्मात् ॥ ६६ ॥

इन्द्रेण सजूः सह । 'अश्विभ्यामुपसा सजूः' इत्यादौ दृष्टत्वात् । हरिणेन्द्रेण[2] । सोमपाः सोमं पिबन्तः ॥ ६७ ॥

पर्यतुष्यत् सचेतनत्वात् ॥ ६८ ॥

---

[1] अनिन्दिता वस्तुतः साधुत्वात्—स  [2] हरिणा इन्द्रेण, दितिसेवितेन विष्णुना वा—चेट्टी

अथेन्द्रमाह ताताहमादित्यानां भयावहम् ।
अपत्यमिच्छन्त्यचरं व्रतमेतत् सुदुष्करम् ॥ ६९ ॥

एकः संकल्पितः पुत्रः सप्तसप्ताभवन् कथम् ।
यदि ते विदितं पुत्र सत्यं कथय मा मृषा ॥ ७० ॥

इन्द्र उवाच —

अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् ।
लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥ ७१ ॥

कृतो मे सप्तधा गर्भ आसन् सप्त कुमारकाः ।
तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥ ७२ ॥

ततस्तत् परमाश्चर्यं वीक्ष्याध्यवसितं मया ।
महापुरुषपूजायाः सिद्धिः कार्यानुषङ्गिणी ॥ ७३ ॥

आराधनं भगवत ईहमाना निराशिषः ।
ये तु नेच्छन्त्यपि वरं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥

आराध्यात्मप्रदं देवमात्मानं जगदीश्वरम् ।
को वृणीत गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥

---

आदित्यानाम् अदितिपुत्राणाम् ॥ ६९ ॥

कार्यानुषङ्गिणी कार्यानुकूलं सङ्गमयति[1] ॥ ७३ ॥

फलकामक्रियायोगभाविन्येवंविधा सिद्धिरभूत् किमु निराशीस्त्वेनेति भावेनाह—आराधनमिति ॥ ७४ ॥

गुणस्पर्शम् विषयसुखम् ॥ ७५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
षष्ठस्कन्धे अष्टादशोऽध्यायः ।

---

[1] अध्यवसायप्रकारमाह–महापुरुषेति । महापुरुषस्य भगवतः पूजा, तस्य सकाशाद् भविन्त्री सिद्धिः, फलं भवत, प्रसाद इति यावत् । कार्यानुषङ्गिणी कार्याविनाभूतोऽभिलषितार्थसाधकः । अतो दितिकृतसेवाजन्यभगवत्प्रसादेन मरुतो न मम्रिरे इति (निर्धारयम्) इति भावः—चेट्टी

तदिदं मम दौर्जन्यं बालिशस्य महीयसि ।
क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भोऽमृतोत्थितः[1] ॥ ७६ ॥

श्रीशुक उवाच —

इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ।
मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥

एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
मङ्गलं मरुतां जन्म किं भूयः श्रोतुमिच्छसि ॥ ७८ ॥

इति श्रीमद्भागवते षष्ठस्कन्धे अष्टादशोऽध्यायः ।

॥ अथ एकोनविंशोऽध्यायः ॥

राजोवाच —

व्रतं पुंसवनं ब्रह्मन् भवता यदुदीरितम् ।
तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥ १ ॥

श्रीशुक उवाच —

शुक्ले मार्गशिरे पक्षे योषिद् भर्तुरनुज्ञया ।
आरभेत व्रतमिदं सार्वकामिकमादितः ॥ २ ॥

निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ।
स्नात्वा शुक्लदती शुक्ले वसीतालङ्कृताम्बरे ॥ ३ ॥

---

॥ अथ एकोनविंशोऽध्यायः ॥

अत्र निष्कामत्वेन क्रियमाणं पुंसवनं नाम व्रतं श्रीनारायणानुग्रहजनकज्ञानजनकत्वेन पुरुषार्थ-साधनं भवतीत्यभिप्रायेण प्रश्नोत्तरपूर्वकमेतद् व्रतं निरूप्यते । पुंसवनस्य विधानम् ॥ १ ॥

मार्गशिरे धनुर्मासि शुक्लपक्षे । सार्वकामिकं मोक्षादिसर्वपुरुषार्थसाधनम् । आदितः शुक्लपक्ष-मारभ्य । आदितो मरुतां जन्मेति वा[2] ॥ २ ॥

शुक्ले अम्बरे च ॥ ३ ॥

---

[1] अमृतः सन् तव गर्भ उत्थितः । दिष्ट्या अहमपि मृतोत्थितः त्वत्सङ्कल्पेन मृतप्रायो हरिकरुणयोत्थितः—स

[2] 'आदित' इत्यस्य उत्तरश्लोकस्थेन ' मरुतां जन्म निशम्य ' इत्यनेनान्वय इत्यर्थः । वीरराघवोऽप्याह–आदितः प्रथमं मरुतां जन्म उत्पत्तिं श्रुत्वा इति ।

पूजयेत् प्रातराशात् प्राक् भगवन्तं श्रिया सह ।
नमस्ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ।
महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥

यतस्त्वं कृपया भूत्या तेजसा महतौजसा ।
तुष्ट[1] ईश गुणैः सर्वैस्ततोऽसि भगवान् विभुः ॥ ५ ॥

विष्णुपत्नि महामाये महापुरुषलक्षणे ।
प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥

ओं नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिः बलिमुपाहराणीति[2] । अनेनाहरहर्मन्त्रेण विष्णोरासनार्घ्यपाद्योपस्पर्शन[3]स्नानवासउपवीतभूषणगन्धपुष्पधूपोपहाराद्युपचारांश्च समाहित उपाहरेत् ॥ ७ ॥

हविश्शेषं तु जुहुयादनले द्वादशाहुतीः ।
ओं नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ।
श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ।
भक्त्या संपूजयेन्नित्यं यदीच्छेत् सर्वसंपदः ॥ ८ ॥

प्रणमेद् दण्डवद् भूमौ भक्तिप्रह्वेण चेतसा ।
दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥ ९ ॥

युवां तु विश्वस्य विभू जगतः कारणं परम् ।
इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया ॥ १० ॥

---

प्रभवौ जनकौ ॥ ७ ॥

दशवारं दशसंख्या तदूर्ध्वं यथाशक्ति[4] । तावती सर्वथाऽपेक्षिता ॥ ९ ॥

---

[1] जुष्टः—चेट्टी । तथा हि—भो ईश यतो यस्मात् त्वं कृपादिभिर्जुष्टोऽन्यैश्च सत्यसङ्कल्पत्वादिभिः सर्वैर्गुणैः (जुष्टः) ततः तस्माद् भगवच्छब्दवाच्योऽसि । [2] उपाहारामीति—छ,स [3] उपस्पर्श—छ

[4] एतदनुरोधेन दशावरमिति मूलं स्यात् ।

तस्या अधीश्वरः साक्षात् त्वमेकः पुरुषः परः ।
त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग् भवान् ॥ ११ ॥

गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग् भवान् ।
त्वं हि सर्वशरीरात्मा श्रीः शरीरेन्द्रियाशया ॥ १२ ॥

नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः[1] ।
यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ।
तथेमा उत्तमश्लोक सन्तु सत्या महाशिषः ॥ १३ ॥

इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ।
तन्निस्सार्योपहरणं दत्वाऽऽचमनमर्चयेत् ॥ १४ ॥

ततः स्तुवाना स्तोत्रेण भक्तिप्रह्वेण चेतसा ।
यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १५ ॥

---

सर्वयज्ञः[2] सर्वान्तर्यामी । इयं लक्ष्मीः इज्यान्तर्यामिणी क्रियान्तर्यामिणी । 'अन्तर्यामी तु यज्ञादेः विष्णुरिज्यादिनां रमा । तत्तच्छब्दैस्ततो वाच्यो न तु सर्वस्वरूपतः । अन्तर्यामी श्रियश्चापि विष्णुरेव न संशयः । नान्तर्यामी कश्चिदस्ति विष्णोः क्वापि कुतश्चन' इति वचनात् । फलभुक्[3] यज्ञफलभोक्तरि यजमाने स्थित्वा तत्फलस्य भोजकः ॥ ११ ॥

सत्वादिगुणानां व्यक्तेः कारणम् । फलव्यञ्जकः । गुणभोक्तरि जीवे स्थित्वा तद्भोजकः[4] । शरीरेन्द्रियाणामभिमानिदेवता ॥ १२ ॥

नामरूपयोर्गुणहेतुत्वात् श्रियश्च गुणाभिमानित्वान्नामरूपे श्रीरित्युच्यते । प्रययो निश्चयज्ञानं त्वत्प्रसादजनकत्वम्[5] ॥ १३ ॥

उपहरणं नैवेद्यं निस्सार्य मोचयित्वा ॥ १४ ॥

स्तुवाना स्तुतिं कुर्वाणा । यज्ञोच्छिष्टं पूजाशेषम् ॥ १५ ॥

---

[1] उपाश्रयः—चेट्टी । उप सर्वाधिकाया लक्ष्म्या अपि आश्रयः—चेट्टी । अपाश्रयः अन्याधारसहितः—स

[2] सर्वयज्ञः—सर्वयज्ञान्तर्यामित्वेन तच्छब्दवाच्यः—म । सर्वयज्ञान्तर्यामी—चेट्टी

[3] मुख्यतो भगवान् फलभुगियं भगवती त्वनन्तरमिति ज्ञेयम् । यजमानस्त्ववान्तरतया योग्यतामनतिक्रम्य फलभुक्—स

[4] गुणभुक् तत्तच्छुभभोक्ता—स

[5] प्रत्ययः तत्त्वज्ञानसाधनत्वेन तत्त्वव्यपदेशः—स

पतिं च परया भक्त्या महापुरुषचेतसा ।
प्रियैस्तैस्तैरुपनमेत् प्रेमशीलः स्वयं पतिः ॥ १६ ॥
बिभृयात् सर्वकर्माणि पत्न्या उच्चावचानि च ।
कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥ १७ ॥
पत्न्यां कुर्यादनर्हायां पतिरेव समाहितः ।
विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात् कथञ्चन ॥ १८ ॥
विप्रान् स्त्रियो वरवतीः स्रग्गन्धबलिमण्डनैः ।
अर्चेदहरहर्भक्त्या देवं नियममास्थिता ॥ १९ ॥
उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ।
अद्यादात्मविशुध्यर्थं सर्वकामाप्तये तथा ॥ २० ॥
एतेन पूजाविधिना मासान् द्वादश हायनम् ।
नीत्वा चोपरमेत् साध्वी कार्त्तिके चरमेऽहनि ॥ २१ ॥
श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ।
पयःशृतेन[1] जुहुयाच्चरुणा सह सर्पिषा ।
पाकयज्ञविधानेन[2] द्वादशैवाहुतीः पतिः ॥ २२ ॥

---

महापुरुषो विष्णुरस्मिन् सन्निहित इति बुध्द्या ॥ १६ ॥

पतिः स्वयं यदि पत्न्यां प्रेमशीलस्तर्हि पत्न्यै पत्न्यर्थे उच्चावचानि सर्वकर्माणि पतिः[3] बिभृयात् । तर्हि तत् पत्नीकृतं न स्यादिति शङ्का मा भूत्, उभयोर्दम्पत्योरेकतरेण कृतमिदं पत्न्याकृतं भवति ॥ १७॥

रजोदर्शनादिनाऽनर्हायां पत्न्यां कथमेतदनुष्ठानमन्तरितं घटत इति तत्राह—पत्न्यामिति ॥ १८ ॥

द्वादशमासान् तदात्मकं हायनं, 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः' इत्यभिधानाद्, वर्षं नीत्वा कार्तिके मासि चरमेऽहनि अवसानदिवसे ॥२१॥

पूर्ववत् पूर्वोक्तार्चनविधिना ॥ २२ ॥

---

[1] पयश्शृतेन क्षीरपक्वेन—व [2] पाकयज्ञविधानेन स्मार्तसूत्रोक्तविधिना । होममन्त्रस्सूक्त एव—ब
[3] इदं प्रमादपतितं भाति । वाक्यारम्भ एव कर्तृपदसद्भावात् ।

ब्राह्मणान् भोजयेद् भक्त्या स्वन्नाद्यैर्द्वादशात्मवित् ।
तेभ्यो दद्यात् तिलान् राजन् सोदपात्रानिडान्वितान्[1] ॥ २३ ॥

आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ।
प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥ २४ ॥

आचार्यमग्रतः कृत्वा वाग्यतः सुसमाहितः ।
दद्यात् पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम्[2] ॥ २५ ॥

एतच्चरित्वा विधिवद् व्रतं विभोरभीप्सितार्थं लभते पुमानिह ।
स्त्रीत्वे तदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम् ॥२६॥

कन्याऽपि विन्देत समग्रलक्षणं पतिं त्ववीरा हतकिल्बिषा गतिम् ।
मृतप्रजा जीवसुतान् धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २७ ॥

विन्देद् विरूपा विरुजो विमुच्यते य आमयावीऽन्द्रियदेहकल्पः[3] ।
एतत् पठन्नभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम् ॥ २८ ॥

---

द्वादशात्मवित् केशवादिद्वादशमूर्तिलक्षणवेत्ता, ब्राह्मणान् द्वादश, तत्प्रीतये भोजयेदित्यर्थः । सोदपात्रानुदपात्रसहितान् । इडान्वितान् भूमिसहितान्[4] तिलान् । भूमितिलगुडशब्दवाच्यैः पायसाद्यधिकान्नैर्युक्तानिति वा ॥ २३ ॥

शोभनं प्रजास्त्वं येन स तथा । शोभनं सौभाग्यं[5] येन स तथा तम् । एतच्चरुविशेषणम् ॥ २५ ॥

जीवपतिम् आयुष्मन्तं पतिम् । गृहान् गृहाणि ॥ २६ ॥

अवीरा[6] पतिरहिता कन्या समग्रलक्षणं पतिं विन्देत । मृतप्रजा तु जीवत्सुतान् विन्देत ॥२७॥

---

[1] गुडान्वितान्—स.वि.   [2] सुप्रजस्त्वं सुसौभगम्—व

[3] विरुजो बहुरोगतो विमुच्यते मुक्तो भवति । न केवलं तावदेव । बलमपि भवतीत्याह—इन्द्रियदेहकल्पः । इन्द्रियैः पृथक् पृथग् देहेन अङ्गेन च कल्पः समर्थश्च भवतीति—स

[4] भूमीत्यस्य सङ्गतिर्नव्यक्ता । भूमितिलसहितगुडशब्दवाच्यैः—व   [5] सौभगम् इति स्यात् ।

[6] वीरो भर्ता, तद्रहिता हतकिल्बिषा गतपापा जन्मान्तरे समग्रलक्षणं पतिं विन्देत । तदनन्तरं गतिं भगवल्लोकम्—स

**तुष्टाः प्रयच्छन्ति समस्तकामान् होमावसाने हुतभुक् श्रीहरिश्च ।**
**राजन् महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत् ते　॥ २९ ॥**

**इति श्रीमद्भागवते षष्ठस्कन्धे एकोनविंशोऽध्यायः ॥**

॥ समाप्तोऽयं षष्ठः स्कन्धः ॥

---

विरूपा दृष्टिविरुद्धरूपा अग्र्यं रूपं विन्देत । इन्द्रियदेहशक्तिरहिता या सा विरुजो विविधरोगान्मुच्यते । अभ्युदये कर्मणि मङ्गलकर्मणि । पितृदेवतानाम् अनन्ततृप्तिमुपैतीति शेषः ।

भक्तिप्रह्वग्रीवासक्तगतिसमुक्षितः सुरराशिमिमं-[1]
क्षितश्रीब्रह्मप्राणेशप्रमुखविबुधमुकुटतटीघट्टितपादपीठकम् ।
वन्दे लक्ष्मीकान्तं घनरससंवित्सारुचं सरोरुहलोचनं
सत्यज्ञानानन्दाकारं मुदितसुजनसमुदायं मर्दितासुरसंपदम् ॥

शब्दशक्त्यनुसारेण विजयध्वजभिक्षुणा ।
पदरत्नावली भाति षष्ठस्कन्धगता कृता ॥

अनुकूलं यदादिष्टमभून्नारायणस्य ह ।
प्रसादतो लब्धमिदं तदा (सदा ?) पुण्यदमस्तु मे[2] ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां पदरत्नावल्याख्यायां
षष्ठस्कन्धे एकोनविंशोऽध्यायः ।

॥ समाप्तोऽयं षष्ठः स्कन्धः ॥

---

[1] समुक्षितमुरादिमिमंक्षित ....?　　[2] अयं श्लोकः व कोशे एव दृश्यते । नान्यत्र ।